आचार्य श्रीमद् विजयदानसूरीश्वर जैनग्रन्थमाला ग्रन्थाङ्क (२६)

सहस्रावधानि श्रीमन् मुनिसुन्दरसूरि शिष्यरत्न
श्रीसोममण्डनसूरिविरचिता

# श्रीयुगादिदेशना ॥

सकलागमरहस्यवेदि आचार्य श्रीमद् विजयदानसूरीश्वर पट्टप्रभावक सिध्धान्तमहोदध्याचार्य श्रीमद् विजयप्रेमसूरीश्वर पट्टालंकार महाराष्ट्रदेशोद्धारक व्याख्यानवाचस्पति आचार्य श्रीमद् विजयरामचन्द्रसूरीश्वर चरणारविन्द भ्रमरायमाण मुनि मानविजयेन संशोधिता.

प्रकाशयित्री—आचार्य श्रीमद् विजयदानसूरीश्वर जैनग्रन्थमाला, सुरत.
मुद्रक—शंकर नरहर जोशी, चित्रशाळा प्रेस, सदाशिव १०२६ नं. २ पुणें.

वीर संवत् २४६७ | विक्रम संवत् १९९७ | क्राइष्टस्य १९४०

पण्यम् रूप्यैकम्

# प्रकाशकीय निवेदन.

अनन्त उपकारी एवा श्रीजिनेश्वरदेवना शासनमां अनादिकालथी रखडता भव्यजीवोना उपकार माटे द्रव्यानुयोग, गणितानुयोग, चरणकरणानुयोग अने धर्मकथानुयोग एम चार अनुयोगो प्ररुपेला छे. तेमा पण बाल जीवोने धर्मकथानुयोग विशेषतया उपकारक नीवडे छे, अने तेथी पूर्वाचार्योए वैराग्यरसथी भावित अने संसारनी असारता जणावनारा अनेक कथानक ग्रन्थो गद्यपद्यात्मकमां रचेला छे, जेमांनो आ एक युगादिदेशना नामनो ग्रन्थ छे.

सदरहु ग्रन्थमां आ अवसर्पिणीमां थयेल प्रथम तीर्थंकर श्रीऋषभदेवस्वामिना अठाणुं पुत्रोने ज्यारे श्रीभरतमहाराजा पोतानी आज्ञा मानवा अगर लडाई करवा माटे दूतद्वारा जणावरावे छे ते वखते ते पुत्रो तेमांथी पोताने शुं करवुं तेना निर्णय उपर नहि आवी शकवाथी पोताना पिता श्रीऋषभदेवने पूछवा आवे छे के अमारे शुं करवुं ? भरतनी आज्ञा मानवी के भरतनी साथे लडवुं ? ते वखते भगवान तेमना एक पण प्रश्ननो उत्तर नहि आपता तेओने कषायोनी विषमता, वैषयिकसुखोनी तुच्छता, लक्ष्मीनी चंचलता अने संसारनी असारताने जणावनारो सचोट उपदेश आपी मोक्षमार्गनी आराधना माटे उत्साहित बनावे छे जेनी संकलना आ ग्रन्थकर्ताए पणीज उत्तमरीतिए करी छे.

सदरहु ग्रन्थनी अंदर श्रीऋषभदेवस्वामिए पोताना पुत्रोने तेमना पूछेल प्रश्नोनो उत्तर नहि आपतां जे केवल धर्मोपदेश आप्यो ते उपरथी जैन मुनिओनी उपदेशशैली केवा प्रकारनी होवी जोइए तेनो स्पष्टतया ख्याल आपवामां आव्यो छे. आजे जैन समाजनी अंदर

ज एक प्रकारनो प्रचार केटलाक साधु समुदाय तरफथी तथा श्रावकवर्ग तरफथी थइ रह्यों छे के साधुओ धर्मोपदेश सिवाय. बीजो पण सामाजिक उपदेश आपी शके अने गृहस्थनी आर्थिक उन्नति तथा व्यवहारिक ज्ञाननी वृध्धिनो उपदेश आपी शके तेओने माटे आ ग्रन्थनी अंदर आपेल उपदेश अत्यंत विचारवा लायक छे के जे विचारवाथी पोतानी थनी गेरसमजनो सहेजे ख्याल आवी शकशे.

सदरहु ग्रन्थना कर्त्ता श्रीतपागच्छना आद्यपुरुष आचार्य श्रीमज्जगच्चन्द्रसूरीश्वरजीनी परम्परामां थयेल बालब्रह्मचारी लघुवय-दीक्षित सहस्त्रावधानी आचार्य श्रीमद् मुनिसुन्दरसूरीश्वरजीना विनेयरत्न आचार्य श्रीसोमभण्डनसूरीश्वरजी छे, अने ते हकीकत तेमणे ग्रन्थनी समाप्तिमां जणावेल छे.

सदरहु ग्रन्थनी रचना क्यारे करवामां आवी तथा ग्रन्थकर्त्ताए क्यारे अने क्यां दीक्षा लीधी तथा क्यारे निर्वाण पाम्या ते विगेरेनी माहिती साममीना अभावे आपी शकाइ नथी.

सदरहु ग्रन्थ प्रथम पण्डित अमृतलाल अमरचन्द्र तरफथी छपाइने बहार पडेल परंतु तेमां केटलीक अशुध्धिओ होवाथी अने हाल ते ग्रन्थ अलभ्य होवाथी अने बालजीवोने उपदेश आपवामां अति उपयोगी होवाथी आ ग्रन्थने अमारी संस्था तरफथी फरी प्रकाशित करवामां आवे छे.

प्रथम छपायेल ग्रन्थनी अशुध्धिओ दूर करवा माटे बीजी हस्तलिखित प्रत माटे तपास करवामां आवी, परंतु तेनी प्राप्ति न थवाथी छपायेल प्रतने तपासी तेमांनी अशुध्धिओ दूर करवा उपर पूरतुं लक्ष्य आपी संशोधननुं कार्य मुनिवर्य श्रीमानविजयजी महाराजे करेल छे, जेथी सदरहु संस्था तेओश्रीनी अत्यंत ऋणी छे. एओश्रीए संशोधनमां पूरतुं ध्यान आपवा छतां पण दृष्टिदोष अगर प्रेसदोषने लीधे कांइ पण स्खलना रहेवा पामी होय तो वांचकवर्ग सुधारी लेशे एवी आशा राखवामां आवे छे.

सदरहु ग्रन्थने प्रकाशित करवामां आर्थिक सहाय पुना शहेरमां वि. सं. १९९६ ना चातुर्मासमां पूज्य साध्वी महाराज लक्ष्मीश्रीजीना उपदेशथी श्राविकाओए नवकारमंत्र तपनी आराधना करेली ते वखते ज्ञानद्रव्यनी उपज तथा पुना लश्करमां पूज्य मुनिराजश्री मनोहरविजयजी महाराज कालधर्म पाम्या ते वखते स्व. मोहनलाल धुलासीदासना धर्मपत्नी वहुव्हेन तरफथी बोलाएल रकमनी मळेल छे, तेथी तेओनी श्रीश्रुतज्ञानने भक्ति परत्वेना बहुमाननी प्रशंसा करवामां आवे छे.

सदरहु संस्थानी स्थापना वि. स. १९९४ नी सालमां बहु नाना पाया उपर नाना ग्रन्थो प्रसिद्ध करवा माटे मारा तरफथी गुरुभक्ति निमित्ते करवामां आवी हती, परंतु त्यार पछी ए परमतारक गुरुदेवना समुदाये पोताना उपदेशद्वारा धर्मिजनोनी आर्थिक सहायथी अने पोताना अमूल्य अवसरनो अमूल्य लाभ ग्रन्थो संशोधन पाछळ आपी संस्कृत, प्राकृत अने भाषाना ग्रन्थो, अने तेमां केटलाक तो अद्यापि पर्यन्त नहि प्रसिद्ध थयेल तेवा ग्रन्थोने प्रकाशित करावी मारा ते कार्यने अत्यंत वेग आप्यो जेना प्रतापे छव्वीसमा ग्रन्थांक तरीके सदरहु ग्रन्थ प्रकाशित करवामां आवे छे. आथी ते आ संस्थाने वेग आपनार ते ते पूज्य महात्माओनो अने पोतानी चंचल लक्ष्मीनो सदुपयोग करनार गृहस्थोनो आ संस्था तरफथी आभार प्रदर्शित करवामां आवे छे. ते रीते हजु पण संस्था तरफथी बीजा ग्रन्थो प्रकाशित थइने बहार पाडवामां अमोने तेवी सहाय मळो एम अमे आशा राखीए छीए. एज.

ली.

मास्तर हीरालाल रणछोडभाई.
कार्यवाहक. आ. श्रीविजयदानसूरीश्वर जैनग्रन्थमाला.

कायच मोहल्लो, गोपीपुरा–सूर्यपूर.
वि. स. १९९७ सौभाग्यपंचमी.

आचार्यश्रीमद्विजयदानसूरीश्वरेभ्यो नमः ॥

# युगादिदेशना

## कर्ता–श्रीसोममण्डनसूरि.



श्रीमानादिजिनः श्रेयो, विश्राणयतु भविनाम् । युगादौ युग्मिनां शास्ता, धर्मकर्मव्यवस्थितेः ॥ १ ॥ यस्याः श्रवणमात्रेण, जन्मकोटिकृतान्यपि । नश्यन्त्येनांसि जन्तूनां, सा युगमतिबोधिनी ॥ २ ॥ श्रीमदाद्यार्हतो धर्म–देशना किञ्चिदुच्यते । स्वान्ययोः पुण्यपोषाय, मया मोषाय चांऽहसाम् ( युग्मम् ) ॥ ३ ॥ इयं हि मे फलोत्पन्ना, नर्मदाऽपि सरस्वती । सम्यग्दृष्टिभिरासेव्या, यत्तीर्थगुणशालिनी ॥ ४ ॥ तथाहि–युग्मिलोकानृजुजडान्, व्यवहारे प्रवर्तयन् । युगादौ श्रीयुगाधीश–श्चिरं राज्यमपालयत् ॥ ५ ॥ अथ प्रथयितुं पथ्यं, तथ्यं मुक्तिपथं नृणाम् । स प्राव्राजीच्छतं पुत्रान्, न्यस्य राज्ये पृथक् पृथक् ॥ ६ ॥ सहस्रं शरदः स्वामी, खड्गधाराव्रतं चरन् । सुदुस्तपं तपस्तप्त्वा, केवल-

ज्ञानमाप्तवान् ॥ ७ ॥ अथ षट्खण्डभूभर्ता, भरतेश्वरभूपतिः । आजूहवत् स्वसेवार्थं, सकलाननुजन्मनः ॥ ८ ॥
आहूता अग्रजेनाऽष्ट–नवतिस्ते सहोदराः । व्यमृशन्निति संभूय, विपण्णमनसो मिथः ॥ ९ ॥ विभज्य राज्यं तातेन, दत्तं नो भरताय च । सेव्यमानः किमस्माक-मधिकं स करिष्यति ? ॥ १० ॥ समापतन्तं किं काले, कालं प्रस्खलयिष्यति ? । किं जराराक्षसीं देह–ग्राहिणीं निग्रहिष्यति ? ॥ ११ ॥ बाधाविधायिनः किं वा, व्याधिव्याधान् हनिष्यति ? । यथोत्तरं वर्धमानां, यद्वा तृष्णां दलिष्यति ? ॥ १२ ॥ ईदृक्सेवाफलं किञ्चित्, स दातुं यदि न क्षमः । मनुष्यभावे सामान्ये, तर्हि कः केन सेव्यताम् ? ॥ १३ ॥ यद्दत्तं भुज्यते राज्यं, स सेव्यस्तैरिति स्थितिः । तातात्तराज्यैर्भरतः, सेव्यते च किमात्मभिः ? ॥ १४ ॥
षट्खण्डभरतोर्वीश—विजयोन्मत्तमानसः । यदेष सेवकीकर्तु—मस्मानपि समीहते ? ॥ १५ ॥ सोऽग्रजः किं न वेत्त्यस्मां-स्तत्तस्यैव पितुः सुतान् । बिले बिले न गोधा यत्, क्वापि स्यादुत्फणः फणी ? ॥ १६ ॥ एवं सत्यपि चेदेष, कथञ्चिन्न विरंस्यति । स्वाम्यहं सेवकाश्चैते, ममेत्यध्यवसायतः ॥ १७ ॥ हेलयैव विजित्यैनं, तत्सभूय रणे वयम् । एतद्राज्यं ग्रहीष्यामः, षट्खण्डविजयाहृतम् ॥ १८ ॥ परं युद्धे कृते यूयं, ज्येष्ठभ्रात्रा समं किमु ? । दुर्विनीता अयुध्यध्व-मिति कर्ता रुषं पिता ॥ १९ ॥ सर्वैस्तेनात्मभिर्गत्वा, प्रथमं पृच्छ्यते पिता । पश्चाद्यथातदादेशं, पुनः कार्यं विधीयते ॥ २० ॥ इत्यालोच्याऽष्टनवतिः कुमाराः स्फटिकाऽचले । ययुः प्रश्नयितुं तातं, वृषभं जिनपुङ्गवम् ॥ २१ ॥ प्रभुं प्रदक्षिणीकृत्य, नत्वा स्तुत्वा च तत्र ते । उपाविशन् यथास्थानं, देवमानवसंसदि ॥ २२ ॥ अथारेभे जगन्नाथः, प्रथमां पुण्यदेशनाम् । मोहापोहाय पुत्राणां, संदेहाय च संसदाम् ॥ २३ ॥
तथाहि —दुष्पापं प्राप्य मानुष्यं, सौम्याः ! सर्वाङ्गसङ्गतम् । धर्मे सर्वात्मना यत्नः, कार्यः स्वात्मसुखार्थिभिः ॥ २४ ॥ तत्र च—

दुष्पर्यन्तनोपाया, अन्तरायाः शुभश्रियाम् । तपसामपथा हेयाः, कषायाः प्रथमं बुधैः ॥ २५ ॥ सकषायो नरः सन्तु,
गुणवानपि नार्च्यते । यतो न विषसम्पृक्तं, परमान्नमपीष्यते ॥ २६ ॥ यथा प्रज्वलितोऽरण्ये, दवाग्निर्दहति द्रुतम् ।
कषायवशगो जन्तु-स्तथा जन्मार्जितं तपः ॥ २७ ॥ धर्मश्चित्ते दुराधेयः, कषायकलुषात्मनाम् । रङ्गो यथा कुसुम्भस्य,
नीलीभाजनवाससि ॥ २८ ॥ यथाऽन्त्यजं स्पृशन् स्वर्ण-वारिणापि न शुध्यति । सकषायस्तथा जन्तु-स्तपसाऽपि न
शुध्यति ॥ २९ ॥ हरत्येकदिनेनैव, तेजः षाण्मासिकं ज्वरः । क्रोधः पुनः क्षणेनापि, पूर्वकोट्यार्जितं तपः ॥ ३० ॥
सन्निपातज्वरेणेव, क्रोधेन व्याकुलो नरः । कृत्याकृत्यविवेके हा, विद्वानपि जडीभवेत् ॥ ३१ ॥ तपोभिर्भृशमुत्कृष्टै-रावर्जितसुरौ
मुनी । कूरटोत्करटौ कोपात्, प्रयातौ नरकावनीम् ॥ ३२ ॥ विवेकलोचनध्वंसा-दन्धङ्करणमात्मनः । मानाऽभिधं तमो नूनं, पातये-
न्नरकाऽवटे ॥ ३३ ॥ क्षेप्तुं क्षमोऽप्यलोकान्त-र्लोकं वीरजिनेश्वरः । ईषद्गोत्राभिमानेन, नीचैर्गोत्रं ह्यवातरत् ॥ ३४ ॥ यदुक्तम्—
जातिलाभकुलैश्वर्य-बलरूपतपःश्रुतैः । कुर्वन् मदं पुनस्तानि, हीनानि लभते जनः ॥ ३५ ॥ असूनृतखनी दोष-ध्वान्तप्रसरयामिनी ।
अनयजननी हेया, माया दुर्गतिवर्तिनी ॥ ३६ ॥ तपोऽपि दुस्तपं तप्त्वा, पूर्वजन्मनि मायया । मल्लिनाथोऽभवन्नारी, पारीणोऽपि
भवाम्बुधेः ॥ ३७ ॥ दोषाणामाकरः सर्व-सद्गुणद्रुमपावकः । कलिकेलिगृहं लोभः, पातयेद्व्यसनार्णवे ॥ ३८ ॥ द्वितीयभरतैश्वर्य-
लोभेनाम्बुनिधिं तरन् । सुभूमभूपतिर्भोग-जीवितभ्रंशमाप्तवान् ॥ ३९ ॥ एकैकोऽपि कषायश्चे-देवं जन्तुभिराहतः । महाऽनर्थाय
चत्वारो, न तत्समुदिताः कथम् ? ॥ ४० ॥ कषायपरिहारेण, नरो भवति निश्चितम् । माननीयो मनुष्येषु, देवानामपि
दैवतम् ॥ ४१ ॥ अत्रान्तरे कुणालोऽवक्, कुमारस्तात ! तत्कथम् । धर्मो भविष्यत्यस्माकं, कषायकलुषात्मनाम् ॥ ४२ ॥

किमस्मानादिशत्येवं, भरतः सेवकानिव । इति क्रुद्धा वयं हन्त ! सोदरं हन्तुमिच्छवः ॥ ४३ ॥ ऐश्वर्याहार्यदोर्वीर्याभिमानोद्धतचेतसाम् । अप्यग्रजन्मने तात ! कन्धरा न नमन्ति नः ॥ ४४ ॥ षट्खण्डोर्वीजयोन्मत्तं, भरतं जेतुमिच्छवः । मायया विविधं छद्म, चिन्तयामोऽप्यहर्निशम् ॥ ४५ ॥ षट्खण्डपृथिवीभर्तु-र्ज्येष्ठभ्रातुरपि श्रियम् । विजित्याशु जिघृक्षाम-स्तीव्रलोभोदयाद्वयम् ॥ ४६ ॥ एवं चतुर्भिरप्युग्रैः, कषायैः कलुषाशयाः । कथं तात ! भविष्यामो, यास्यामो वा गतौ क्व हा ! ॥ ४७ ॥ अथादिशत् पुनः स्वामी, वत्साः ! कटुफलोदयाः । चत्वारोऽपि विधीयन्ते, न कषाया हितैषिभिः ॥ ४८ ॥ वत्साः ! स्वच्छाशयीभूय, भवनिर्वेदकारणम् । सकषायकुटुम्बस्य, दृष्टान्तोऽत्र निशम्यताम् ॥ ४९ ॥ जम्बूद्वीपेऽत्र भरते, निःसमानसमृद्धिभिः । आसीत्स्वर्गपुरस्पर्द्धि, पुरं विजयवर्धनम् ॥ ५० ॥ तस्मिन्नुन्निद्रभद्रश्री, रुद्रदेवोऽभिधानतः । श्रेष्ठी श्रेष्ठगुणश्रेणीपात्रं सत्रं श्रियामभूत् ॥ ५१ ॥ परं स रोषदोषेण, गुणवानप्यदुष्यत । निम्बस्त्रिदोषहन्तापि, कटुत्वेन यथा जने ॥ ५२ ॥ प्रेयसी श्रेयसी भक्ति-स्तस्याऽभूद् गुणवत्यपि । रोषेणाग्निशिखारूपा, सुरूपाऽग्निशिखाऽभिधा ॥ ५४ ॥ निमित्तेऽप्यनिमित्ते वा, क्रोधोद्बोधेन तावुभौ । सस्नेहालापहास्यादि, मिथो जातु न तेनतुः ॥ ५५ ॥ तिस्रोऽथेभ्यसुता नाम्ना, शिलानिकृतिसंचयाः । क्रमेणोद्वाहयामास, यौवने स सुतैस्त्रिभिः ॥ ५६ ॥ चतुर्भिरपि कोपाद्यैः, कषायैः प्रबलोदयैः । विभज्येव क्रमात्तेषु, द्वन्द्वं द्वन्द्वमधिष्ठितम् ॥ ५७ ॥ तथाहि—रुद्रदेवश्चाग्निशिखा, क्रोधेन विकृताननौ । न मिथस्तनयादौ च, क्वचिच्छैतल्यमापतुः ॥ ५८ ॥ शृंगरोऽथ सपत्नीको, गमिस्त्वेव कुशीलताम् । मानार्हेष्वपि मानेन, ननाम न कदाचन ॥ ५९ ॥ कुडंगो निकृतिश्चापि, मायया स्वजनेष्वपि । वञ्चनानिरतौ क्वापि, न विश्वास्यौ बभूवतुः ॥ ६० ॥ समुद्र इव दुष्पूरः, सागरः सञ्चयान्वितः । जगतोऽपि

धनं लोभा-दात्मसात्कर्तुमिच्छति ॥ ६१ ॥ एवं कर्मानुभावेन, कषायैः प्रबलोदयैः । वपूरोगैरिवोदग्रै-स्तत्कुटुम्बं विडम्ब्यते
॥ ६२ ॥ रुद्रदेवोऽन्यदाऽवादीत्स्नेहेनाऽग्निशिखामिति । विकारबहुलं कान्ते! यौवनं यमिनामपि ॥ ६३ ॥ उक्तं च
यौवने विकरोत्येव, मनः संयमिनामपि । राजमार्गेऽपि रोहन्ति, प्रावृट्काले किलाङ्कुराः ॥ ६४ ॥ ततो विकारबाहुल्याद्,
गृहिणीवशवर्तिनः । नाधुनाप्यनुवर्तन्ते, त्वां सुता विनयोज्झिताः ॥६५॥ सांप्रतं तव वध्वोऽपि, यौवनोन्मत्तचेतसः । आत्मानं बहु
मन्यन्ते, भक्तितो भवतीं न तु ॥ ६६ ॥ न सम्यग् जीवितेयत्ता, च्छद्मस्थैरवगम्यते । यज्जातु म्रियतेऽधैवा-धवा यद्यपि जीव्यते
॥ ६७ ॥ दुर्निर्वाहं वार्धकं च, परायत्ताखिलक्रियम्।धनिनामपि जायेता-ऽधनानां तु किमुच्यते ! ॥ ६८ ॥ आयतौ तव तेनाय-
माशाविश्रामहेतवे । मया दत्तोऽद्य दीनार-सहस्रः स्थाप्यतां रहः ॥ ६९ ॥ स्नुषानामिदमाख्येयं, न कदाचित्त्वया प्रिये ! ।
कुड्याऽन्तरस्थिताऽश्रौषी-दखिलं निकृतिश्च तत् ॥ ७० ॥ अन्यदा चावदच्छ्रेष्ठी, पत्नीमिति क्षिताविमौ । निधीयमानौ
दीनार-सहस्रौ पश्य वल्लभे ! ॥ ७१ ॥ विशूचिकाग्निहृच्छूल-नीरोगविषादिभिः । मृतिश्चेज्जातु जायेत, ममाकस्मादतर्किता !
॥ ७२ ॥ परलोकाध्वपान्थस्य, मम पत्नि ! त्वया तदा । मदास्नैतद्व्ययेनाऽ, देयं सुकृतशम्बलम् ॥ ७३ ॥ अवमत्य सुतान्
कान्ते ! विश्वासाद्गोप्यमप्यदः । तथैवाल्पापि मत्पत्नी, पत्युः समसुखासुखा ॥ ७४ ॥ रुद्रदेवेन जायायाः, प्रोच्यमानं रहस्यपि ।
पुरंदः कपटी कुड्या-न्तरस्थः श्रुतवानिदम् ॥ ७५ ॥ अथान्यदा तदावाभ्यां, श्वशुरेणार्पितं धनम् । श्वश्रूं कथञ्चिदावर्ज्य,
विभज्यादीयते ध्रुवम् ॥ ७६ ॥ अन्योऽन्यं मन्त्रयित्वेति, लुब्धे निकृतिसंचये । कैतवेनाहतुः श्वश्रूं, बाष्पाविलविलोचने ॥ ७७ ॥
(युग्मम्) शिला ज्येष्ठधूर्मात-र्गैर्वैणोत्तानकन्धरा । स्नानाभ्यङ्गादिसत्कारं, तनोस्तव तनोति न ॥ ७८ ॥ यौवनोन्मत्तचित्ताभ्या-

मात्राभ्यामपि नाऽम्ब ! यत् । अत्र यावत्त्वत्रातेने, तनोः स्नानादिसत्कृतिः ॥ ७९ ॥ आवां तु साम्प्रतं पश्चा-त्तापवह्निं तमात्मनः । निर्वापयितुमिच्छावः, श्वश्रूसत्कृतिवारिभिः ॥ ८० ॥ इति च्छद्मवचोभिस्ता-मावर्ज्य प्रथमेऽहनि । निकृतिर्भोजयामास, स्नानाभ्यङ्गादिपूर्वकम् ॥ ८१ ॥ संचयापि द्वितीयेऽह्नि, तथैवादृतिपूर्वकम् । घृतपूराज्यपक्वान्न-विशेषात्तामपीप्रिणत् ॥ ८२ ॥ प्रत्यहं वारवारेण, स्नुषे निकृतिसंचये । वर्धमानां क्रमेणैव, श्वश्रूभक्तिं वितेनतुः ॥ ८३ ॥ वधूवैनयिकेनाऽथ, कृत्रिमेणापि तेन सा । सत्येनेव भृशं प्रीता, ऋजुरेवं व्यभावयत् ॥ ८४ ॥ काचित्स्नुषा सपत्नीव, च्छिद्रान्वेषणतत्परा । श्वश्रूननान्दृभिस्सार्कं, सर्वदा कलहायते ॥८५॥ आगतैव स्नुषा कापि, न्यूनाधिकप्रलापिनी । स्वच्छन्दा पतिमावर्ज्य, पितृभ्यां कुरुते पृथक् ॥ ८६ ॥ सस्नेहा विनयोद्युक्ता, श्वश्रूभर्तृननान्दृषु । कमलादेहिनी पुत्र-गेहिनी काचिदीक्ष्यते ॥ ८७ ॥ परं पुरातनैः पुण्यै-रेवं शुश्रूषणोद्यते । कुलीने शीलसम्पन्ने, ममाभूतामिमे स्नुषे ॥ ८८ ॥ अन्यच्च सुकृतैः स्त्रीणां, विश्वासस्थानमादिमम् । तनयोपरि हृन्नेत्रा-नन्दिनी नन्दना भवेत् ॥ ८९ ॥ सा तु मे तनुजा नाऽभूत्, परं दैवानुकूल्यतः । स्नुषारूपेण संजाते, सुते निकृतिसंचये ॥ ९० ॥ स्नुषे चेदिति शुश्रूषां, यावज्जीवं करिष्यतः । तत्किं धनेन मे कार्य-माशाविश्रामहेतुना ? ॥ ९१ ॥ किञ्च गोप्यं न मे किञ्चि-त्स्नुषयोर्भक्तिनिष्ठयोः । दर्शयामि ततो गुप्तं, स्वं निधिस्थानमेतयोः ॥ ९२ ॥ आकस्मिकेऽपि मरणे, मम कर्हिचिदागते । भवाम्युच्छ्रावणा चैव-मेतद्भक्तेर्धनार्पणात् ॥ ९३ ॥ सर्वकर्मसु भद्रेव, साहङ्कारतया शिला । मया त्यक्ता पुरापीति, तस्याः स्वं कथमर्प्यते ? ॥ ९४ ॥ इत्यालोच्याग्निशिखया, तत्स्थानं दर्शितं तयोः । युवाभ्यां मन्मृतौ ग्राह्यं, स्वं विभज्येत्यवादि च ॥ ९५ ॥ मातर्भूयाश्चिरायुस्त्वं, किं कार्यमनुनाऽऽवयोः । इति निःस्पृहतादम्भ-माविर्भावयतः स्म ते ॥ ९६ ॥ यतः—

मनदम्भः श्रुतदम्भः, स्नातकदम्भः समाधिदम्भश्च । निःस्पृहदम्भस्य तुलां, व्रजन्ति नैते शतांशेन ॥ ९७ ॥ वञ्चयित्वाऽ-
न्यदा भर्तृं, लोभेनादाय तद्धनम् । निशीथेऽन्यत्र भूपीठे, रहस्ताभ्यां निचिक्षिपे ॥ ९८ ॥ कृतार्थाभ्यां ततस्ताभ्यां, पति-
मातरि सत्कृतिः । छायेव दिनपूर्वार्द्धे, हीयमाना व्यधीयत ॥ ९९ ॥ मागादरमथालोक्य, पश्चाच्चाऽनादरं तयोः ।
चकिताऽशिङ्किता चित्ते, निजमैक्षिष्ट तं निधिम् ॥ १०० ॥ अनवेक्ष्याऽथ दध्यौ, हृतो नूनं निधिर्मम ।
मायाविनीभ्यामेताभ्यां, यत्स्थानं वेत्ति नाऽपरः ॥ १ ॥ सामूयमथ साऽभाषी-ज्जानीथस्तं स्नुषे युवाम् । ते अपि प्रोचतुर्मात-
र्निधिं विद्मो यदि क्रिया ॥ २ ॥ देवस्य सद्गुरूणां च, स्पृशावश्चरणौ तदा । सर्वतीर्थगरीयस्या, भर्तृमातुस्तथा तव ॥ ३ ॥
कुलजानां नयैः शुद्धि-र्व्यलीकेऽप्य । महत्यपि । प्राणान्तेऽपि यतो मिथ्या, कुलीनास्ताश्च कुर्वते ॥ ४ ॥ आवयोः
नयैरेतैः प्रत्ययस्ते न चेत्तदा । त्वदादिष्टं करिष्यावः, शुद्ध्यै दिव्यमपि ध्रुवम् ॥ ५ ॥ किं वोत्सङ्गे पितृभ्यां ते, शिशुत्वेनापि
दीपयान् । पिता माता गुरुर्बन्धुः, श्वश्रूश्चापि त्वमावयोः ॥ ६ ॥ एवं त्वमपि चेद् दोषा-नावयोरप्यदोषयोः । सम्भावयसि
तन्नूनं, शरणात्भयमुत्थितम् ॥ ७ ॥ वधूभ्यां जगृहे वित्तं, निश्चित्येति तदिङ्गितैः । मौनेनाभिशिखा तस्थौ, तयोः कलुषिताशया
॥ ८ ॥ इतश्च रुद्रदेवेन, शान्तपुण्यव्ययाय यत् । वसुधायां धनं पत्नी-समक्षं निहितं रहः ॥ ९ ॥ कुडंगेनापि तद्दृष्टं, सागराय
न्यगद्यत । मित्रस्यापरस्तनारीणा-मिव यत्नोऽभिमायिनाम् ॥ ११० ॥ ततः कथञ्चिदाकर्ण्य, तातं तन्निहितं धनम् । भार्याभ्यां
गृहीतं लोभा-देवं व्यमृशतामुभौ ॥ ११ ॥ ततस्तौ रुद्रविनया-द्वित्थं पितरमाहतुः । तात ! पुत्रास्त्रयो जाता, वर्धिताश्च त्वया
समम् ॥ १२ ॥ परमेकोऽपि शुश्रूषां, न तेने जरतस्तव । तत्सत्यं यद्गुरु स्वेषु, माघूर्णो म्रियते क्षुधा ॥ १३ ॥ अधुना

दुनोत्यावां, पूज्यपूजां विना दिनम् । जङ्गमं तीर्थमाराद्धु-मिच्छावस्त्वां ; ततः पितः ! ॥ १४ ॥ इत्युक्त्वा छद्मवान्वप्तुः, कुडंगः प्रथमेऽह्नि । स्वयं सत्कारमातेने, स्नानभोजनकर्मभिः ॥ १५ ॥ सागरोऽपि द्वितीयेऽह्नि, तथैव तमपिप्रिणत् । हृद्यैरशनपानाद्यैः, सस्नेहालापपूर्वकम् ॥ १६ ॥ वारकेणेति सत्कृत्य, ताभ्यां कतिपयैर्दिनैः । भृशमावर्जितस्तात-श्चिन्तयामासिवानिति ॥ १७ ॥ मान्तपुण्यव्ययार्थं हि, स्थापितं द्रविणं मया । पुण्यव्ययश्च वित्तस्य, सुस्थानस्थापनं स्मृतः ॥ १८ ॥ सुस्थानं चादिमं तत्र, पुत्रः पित्रोः प्रपूजकः । कुडंगसागरौ चैव, पित्रोरत्यन्तभक्तिकौ ॥ १९ ॥ न्यासीकृतधनस्थानं, दर्शयाम्येतयोस्ततः । भावी पुण्यव्ययोऽप्येव-मनृणश्चाहमेतयोः ॥ १२० ॥ विचिन्त्येत्याह तौ वत्सा, युवाभ्यां मरणे मम । द्विसहस्रमितं वत्सौ !, ग्रहीतव्यमिदं धनम् ॥ २१ ॥ आजन्मदुर्विनीतत्वा-दनिष्टो डुंगरस्तु मे । युवाभ्यामर्पणीयोऽस्मै-न भागोऽस्य धनस्य तत् ॥ २२ ॥ आहतुस्तौ चिरं तातो, नन्दतात् किं धनेन नौ । छत्राकारस्त्वमस्माक-मापत्तापहरोऽसि यत् ॥ २३ ॥ यतः—यत्र तत्रापि सुलभं, धनं लाभोदये नृणाम् । हितान्वेषी पुनस्तातः पत्तनेऽपि न लभ्यते ॥ २४ ॥ छद्मवाचेति विश्वास्य, ससारमृजुचेतसम् । लोभात्ताभ्यां निधिर्नीत्वा, रहोऽन्यत्र न्यधीयत ॥ २५ ॥ ततस्ताभ्यां च विनयो-पचारः खण्डितः पितुः । रतिष्ठे-चिराय नाहि कृत्रिमम् ॥ २६ ॥ खण्डिते विनये स्द्र-देवश्चेतसि शङ्कितः । पेक्षिष्ट सुतयोरुक्तं, निधिस्थानं रहः ॥ २७ ॥ सत्कलत्रमिवापत्य-शून्यं शून्यमवेक्ष्य तत् । विलक्षः शिक्यकभ्रष्ट-विडालवद्भूदसौ ॥ २८ ॥ सुताभ्यामपरो नैधिस्थानमिदं न हि । गृहीतो नूनमेताभ्यां, मायाविभ्यां ततो निधिः ॥ २९ ॥ इत्यप्राक्षीत्सुतौ श्रेष्ठी, वत्सौ ! क्वासौ गौ । आहतुस्तौ च यद्यावां, जानीवस्तं निधिं मनाक् ॥ १३० ॥ तव तात ! पदौ तर्हि, स्पृशावो वा मद्वपुः । वाशि

चेत्कर्पयावो या, तथामपि कपर्दिकाम् ॥ ३१ ॥ तातस्याप्यप्रतीतिश्चेन्मनस्येवमिहावयोः । तन्नूनं भाव्यमस्माकं, दुष्कर्मैवापराध्यति ॥ ३२ ॥ तत्र नौ न प्रतीतिश्चेत्तदन्येषां तद् भवेत्कथम् । यल्लोकोक्तिर्लघुर्गेहे, वायुना गृह्यते बहिः ॥ ३३ ॥ कौटिल्यपाटवेनाभ्या-मित्याद्युक्तिप्रयुक्तिभिः । जिज्ञासुः स्वनिधिं श्रेष्ठी, यद्वन्नेव निवारितः ॥ ३४ ॥ ततः कोपाज्ज्वलन्नन्त-रिष्टिकापाकवद्भृशम् । न हि सस्नेहमालापं, स केनापि सहातनोत् ॥ ३५ ॥ एवं कलुषचित्तानां, तेषां कालः कियान्ययौ । गतं स्वनिधिमन्येद्युः, श्रेष्ठिनी श्रेष्ठिने जगौ ॥ ३६ ॥ श्रेष्ठिनाऽथ तदाकर्ण्य, खिन्नेन स्नुषयोरिदम् । आः ! पापे कथितं कस्मा-दित्युक्ते सा रुषाऽवदत् ॥ ३७ ॥ अनात्मज्ञ ! त्वमेवासि, पापीयान् भवताऽपि यत् । आख्याय सुतयोरन्त-र्धनं निर्गमितं निजम् ॥ ३८ ॥ तद्गिरेति ज्वलन्सोऽधिकम्, घृताहुत्येव पावकः । पापे ! कुलाङ्गना नासि, यत्पत्युः प्रतिजल्पसि ॥ ३९ ॥ दण्डधृष्टोरगीवाथ, साऽऽल्पद्रोपारुणेक्षणा । यदाहं त्वत्करे लग्ना, कुलं यातं तदैव मे ॥ १४० ॥ उक्तिप्रत्युक्तिभिश्चैवं, प्रवृद्धे कलहे भृशम् । जघान निर्दयं श्रेष्ठी, दण्डेनाऽग्निशिखां रुषा ॥ ४१ ॥ भवितव्यतया तेन, मर्मघातेन तत्क्षणात् । श्रेष्ठिनी मुमुचे रुद्र-ध्यानार्त्तिरियासुभिः ॥ ४२ ॥ रौद्रध्यानेन सा मृत्वा, स्वसद्मन्युदपद्यत । रक्तेक्षणा विषोदग्रा, कृष्णच्छाया महोरगी ॥४३॥ भ्राम्यन्तीतस्ततो वीक्ष्य, तं निधिं मुदिताथ सा । अधिष्ठाय च लोभेन, तत्रैवास्थत्सदा सुखम् ॥ ४४ ॥ गृह्णाना निधिमन्येद्यु-र्धश्वागत्याथ संचयाम् । दृष्टा वैरेण सर्पिण्या, ममार निकृतिर्लघु ॥ ४५ ॥ आर्तध्यानेन तत्रैव, नकुली साप्यजायत । लोभेन कलहायेते, निधानार्थं मिथश्च ते ॥ ४६ ॥ भृशं स्वाङ्गनिधिमासि-मुदिता संचयाप्यथ । मृता दुष्टोरगीदष्टा, कार्येणोपनिधिस्थिता ॥ ४७ ॥ लोभाद्येन सञ्जाता, स्वसद्मन्येव सा शुनी । ताडितापि च सा मोहा-ज्जातु मुञ्चति नाङ्गणम् ॥ ४८ ॥ विषेण सागरे-

१ * *

पाथ, निधिलुब्धेन मारितः । कुडंगः समभूत्सर्पो, गेहान्तः कालदारुणः ॥ ४९ ॥ तं वीक्ष्य स्वानीत्रे लोभा-त्तत्रैवास्थात्स सर्वदा । सागरोऽपि निधिं गृह्णन् दष्टस्तेनात्मवैरतः ॥ १५० ॥ तत्काले च मृतः सोऽभू-न्नकुलो निधिसन्निधौ । युध्येते निधिलोभेन, मिथस्तावपि सर्वदा ॥ ५१ ॥ आयातेनान्यदा हट्टात् श्रेष्ठिनाऽदर्शि सद्मनि । निधाय डुंगरः पाद-मुपविष्टः पदोपरि ॥ ५२ ॥ कार्ये तेन नियुक्तश्च, नाऽऽदात्पतिवचोऽपि सः । मन्यमानः स्वमुत्कृष्टं, गर्वेणोन्नतकन्धरः ॥ ५३ ॥ स्वावज्ञया तनूजन्मदुर्विनीततया तथा । ज्वलन्नुवाच कोपेन, रुद्रदेवोऽथ डुंगरम् ॥ ५४ ॥ आस्तामन्यो गुणस्ताव-न्नोदरम्भरिरप्यसि । स्वचित्तकल्पितं गर्वं, वहन् मूढ ! न लज्जसे ? ॥ ५५ ॥ यतः—स्वचित्तकल्पितो गर्वं, उपहासाय जायते । उत्क्षिप्य टिट्टिभः पादौ, शेते भङ्गभयाद्भुवः ॥ ५६ ॥ अवज्ञावचनैरेभि-र्भृशं प्रज्वलितः क्रुधा । उच्चावचवचांस्याख्यद्, डुंगरः पितृसम्मुखम् ॥ ५७ ॥ उक्तिप्रत्युक्तिभिः क्रोध-मानभ्रष्टविवेकयोः । कलिं कुर्वाणयोरेवं, जनकाऽङ्गजयोस्ततः ॥५८॥ सर्पिणी नकुली चोभे, भुजङ्गनकुलौ च तौ । क्रोधारब्धकलीभूमे-र्निर्गत्याङ्गणमीयतुः ॥ ५९ ॥ ( युग्मम् ) शिलाप्युपनिधिमाप्ता, तदा कार्येण केनचित् । शुन्या तत्रस्थया दृष्टा, क्रन्दन्ती चाङ्गणेऽपतत् ॥ १६० ॥ सा शुन्यपि शिलामुक्तघातकण्ठगताऽसुका । आङ्गणे न्यपतत्तत्र, रसन्ती विरसं तदा ॥ ६१ ॥ अहो ! आश्चर्यमाश्चर्य-मिति विस्मितचेतसः । विलोकनाय तत्रेयु-स्तदा लोका अनेकशः ॥ ६२ ॥ अभूदाश्चर्यमेकेषा-मेकेषां च हसोद्गमः । तत्र माध्यस्थ्यमन्येषा-मन्येषां च विरागिता ॥६३ ॥ ज्ञानगर्भमुनिर्ज्ञानी, भ्रमन्गोचरचर्यया । तस्मिन्नवसरे श्रेष्ठि-पुण्यैर्भिक्षार्थमाविशत् ॥ ६४ ॥ वृत्तं श्रेष्ठिकुटुम्बस्य, ज्ञानाज्जानन् यथातथम् । हा ! कषायविपाकोऽय-मित्युक्त्वा द्राक् च निर्ययौ ॥ ६५ ॥ पुरो भूत्वा मुनिं श्रेष्ठी, कलिन्यग्रोऽपि ( पृष्टवान् )

तद्वाग्यथार्थमधोवान, साधुः सौम्य ! निशम्यताम् ॥ ६६ ॥ एतद्भवति भवद्गृह-विलसितमतिकटुकपापतरुकुसुमम् । निर्वेदाय
सुधाना-मबुधजनानां तु हास्याय ॥ ६७ ॥ कुडंगसागरौ पुत्रौ, भुजङ्गनकुलाविमौ । सर्पिण्येषा च ते पत्नी, नकुली निकृतिः
पुनः ॥ ६८ ॥ संचयैषा शुनी चैवं, कषायैस्त्वत्कुटुम्बकम् । अन्यान्यरूपतां नीतं, नटपेटकवद् ध्रुवम् ॥ ६९ ॥ आख्याते
मुनिना पूर्व-भववृत्ते च तत्पुरः । जातिस्मरणतो बुद्धा, जीवाः पन्नगोरगादयः ॥१७०॥ प्रपद्यानशनं साधोः, शान्तवैराः परस्परम् ।
पश्चात्तापेन दुष्कर्म, दलयित्वा ययुर्दिवम् ॥ ७१ ॥ ततः सञ्जातसंवेगौ, रुद्रदेवश्च डुंगरः । श्रुतसागरसूरीश—पार्श्वे प्रव्रजिता-
वुभौ ॥ ७२ ॥ रुद्रदेवकापिर्जातु, श्रमणाऽऽवश्यकेऽलसः । प्रवर्तकैः प्रेर्यमाणः, पूर्वाभ्यासेन कुप्यति ॥ ७३ ॥ डुंगरर्षिरपि तप–
स्तन्यमानोऽपि दुस्तपम् । नमाति मायस्वभावेन, नहि रत्नाधिकानपि ॥ ७४ ॥ शास्त्रगर्भोक्तिभिः कामं, शिक्षितौ तौ प्रवर्तकैः ।
क्रोधमानाधिकत्वेन, तैः समं कुरुतः कलिम् ॥ ७५ ॥ सदा तत्कलहोद्विग्नैः, साधुभिः प्रेरितैरथ । गुरुभिः कर्पितौ गच्छा–
द्रुद्रदेवर्षिडुंगरौ ॥ ७६ ॥ तदा गच्छान्तरं प्राप्तौ स्वस्वाभाविकदोषतः । ततोऽपि कर्पितौ तौ च, कीटकाकुलितश्ववत् ॥ ७७ ॥
भ्रष्टौ सर्वगुणेभ्यो, न स्थैर्यं क्वापि चापतुः । मुक्त्वा गच्छमथो जातौ, तौ शीतलविहारिणौ ॥ ७८ ॥ न सत्यापयतः सम्यक्
सर्वाः सूत्रार्थपौरुषीः । निगुप्ति समितीः पञ्च, नाप्याराधयतश्च तौ ॥ ७९ ॥ प्रमत्तौ सकलेष्वेवं, साधूनां धर्मकर्मसु । अन्यदाऽ-
ग्निशिखादेवो, भर्तृपुत्री व्यलोकत ॥ १८० ॥ कृत्वा सोऽग्निशिखारूपं, मतिबोधकृते तयोः । रात्रौ भ्रमति सन्नेत्य, तत्पुरस्तादि-
तस्ततः ॥ ८१ ॥ विलोक्याग्निशिखां रुद्र–देवो वदति विस्मितः । मृताऽभूद्भवती भद्रे ! कथं संप्रति जीविता ॥ ८२ ॥
देवतोपासनैर्मन्त्रै, रसाङ्कैश्चापि सेवितैः । मृता जातु न जीवन्ति, सर्वज्ञोक्तिरियं यतः ॥ ८३ ॥ देवोऽप्याख्यत्तदादाया–ऽनशनं

सर्पिणीभवे । देवभुवमगामेत—द्रूपश्चाहमिहागमम् ॥ ८४ ॥ रुद्रदेवोऽवदन्मुग्ध ! भवानविरतोऽधुना । तत्सर्वविरतावावां, कथं नाम न वन्दते ? ॥ ८५ ॥ स सुरोऽप्यवदत्सर्व–विरतिर्युवयोः कुतः । दुर्विपाकं कषायाणा–मिति विज्ञातशूर्विणौ ॥ ८६ ॥ युवां दुष्कर्मदोषेण, कषायकलुषाशयौ । सेवितं साधुभिर्नित्य—सहायैर्धर्मकर्मसु ॥ ८७ ॥ ऐहिकामुष्मिकाऽनेक—सुखश्रेणिनिबन्धनम् । मूलोत्तरगुणग्रामा—धिष्ठितं सुकृताकरम् ॥८८॥ गच्छं वा संपरित्यज्य, प्रपन्नौ साधुगर्हितम् । यच्छीतलविहारित्वं, दुःखदुर्गतिकारणम् ॥८९॥ (चतुर्भिःकलापकम्) परिणामहितं धर्मं, तयोरित्युपदिष्टवान् । सुपर्वा स तिरोऽधाच्च, विद्युद्द्योतवल्लघु ॥ १९० ॥ तद्वाक्योत्पन्नसंवेगौ, रुद्रदेवर्षिडुंगरौ । श्रुतसागरसूरीशं, क्षतार्थं पुनरीयतुः ॥९१॥ क्रोधमानाधिकत्वेन, युवयोर्दुस्तरं व्रतम् । इत्युक्ते गुरुणा रुद्र–देवः संवेगतां गतः ॥ ९२ ॥ कारणेऽपि न कुप्यामि, यावज्जीवं मनागपि । जग्राहाभिग्रहं सूरि–साक्षीति व्रतसाग्रहः ॥९३॥( युग्मम् ) यावज्जीवं गुरुग्लान—बालवृद्धतपस्विषु । विधास्ये विनयं चैव–माभिजग्राह डुंगरः ॥९४॥ ज्ञात्वाथाऽभङ्गवैराग्य–रङ्गौ रुद्रर्षिडुंगरौ । गुरुणाऽऽलोचनां दत्त्वा, प्राग्वद्गच्छे प्रवेशितौ ॥ ९५ ॥ अष्टकालाद्यतिचार–परिहारेण नित्यशः । अप्रमत्ततया सम्यक्स्वाध्यायं सृजतः स्म तौ ॥ ९६ ॥ सम्यक्त्वमिश्रमिथ्यात्व–कर्मपुञ्जत्रयक्षयात् । अष्टधा दर्शनाचारं, सम्यगाचरतः स्म तौ ॥ ९७ ॥ क्षयेण क्लिष्टचारित्रा—वरणीयस्य कर्मणः । चारित्रं निरतिचारं, प्रापतुस्तौ शुभाशयौ ॥ ९८ ॥ ऐहिकामुष्मिकाशंसा–ऽनपेक्षमथ नित्यशः । षष्ठाष्टमप्रभृति तौ, तेपाते दुस्तपं तपः ॥ ९९ ॥ श्रीजिनोपज्ञयोगेषु, मुक्तिसाधनहेतुषु । वीर्यं प्रयुक्तवन्तौ च, तौ त्रिधापि यथाविधि ॥ २०० ॥ पालयन्त्यौ निजनिजं, ताभ्यां सम्यगभिग्रहम् । शुभध्यानाग्निना भूरि, कर्मेन्धनमदह्यत ॥१॥ जीववीर्यविशेषस्य, सामर्थ्येनातिशायिना । कर्मणः परिणामस्य, सुविचित्रतया तथा ॥ २ ॥ एवमुद्युक्तयोर्मुक्ति—मार्गे

कतिपयैर्दिनैः । उत्पेदे केवलज्ञानं, घातिकर्मक्षयात्तयोः ॥ ३ ॥ ( युग्मम् ) कुणालोऽथावदत्तात ! पूर्वं भूत्वा तथाविधौ । तौ
कथं केवलज्ञानं, लघु पश्चादवापतुः ॥ ४ ॥ अथ स्वाम्यादिशद्वत्स ! जीवसामर्थ्यमद्भुतम् । चित्रः कर्मपरिणाम–श्चात्र
हेतुर्यदुच्यते ॥५॥ जीवाण गई कम्माण, परिणई पुग्गलाण परियट्टं । मुत्तूण जिणं जिणवरमयं च को जाणिउं तरइ ॥ ६ ॥ किञ्च-
पथ्यथेद्गुरवो जातु, स्खलन्ति गुरुकर्मभिः । तथापि गुरुसत्कृत्यै--स्ते स्युर्गुरुतराः पुनः ॥ ७ ॥ साध्यं सत्त्वाधिकैः पुम्भि–
र्निःसत्त्वैश्चातिदुस्तरम् । आद्यं च गुरुकृत्येषु, तप एवोदितं जिनैः ॥ ८ ॥ दुर्लभं सुलभं वक्रं, सरलं वाऽस्थिरं स्थिरम् ।
दुःसाध्यं च सुसाध्यं स्या–त्तपोभिरमलैर्नृणाम् ॥ ९ ॥ भवैरनन्तैराचीर्णा—न्येनांस्यतिगुरूण्यपि । तपो भस्मीकरोत्याशु,
काष्ठानीवाशुशुक्षणिः ॥ २१० ॥ यदुक्तम्—दीप्यमाने तपोवह्नौ, बाह्ये चाभ्यन्तरेऽपि च । यमी जरति कर्माणि, दुर्जराण्यपि
तत्क्षणात् ॥ ११ ॥ पुमान् कर्मेरितः कृत्वाऽप्येनांस्यतिमहान्त्यपि । सम्यगालोचनापूर्वं, शुध्यत्येव तपः सृजन् ॥ १२ ॥
यतः— तपः स्वभावतः सर्व--पापविध्वंसि यत्पुनः । सम्यगालोचनापूर्वं, सिंहः पक्षरितश्च सः ॥१३॥ दृष्टान्तो ब्राह्मणी चात्र,
महादुष्कर्मकारिणी । सम्यगालोच्य कृत्वा च, तपः शुद्धिमुपेयुषी ॥ १४ ॥ तथाहि भरतक्षेत्रे, श्रीविशालपुरे पुरे ।
आसीद्वशीकृताराति:, मूर्तेजा नृपो द्विषा ॥ १५ ॥ सरलप्रकृतिः सौम्यः, कृतज्ञः परदुःखवित् । सदाक्षिण्यः क्षमाशीलो,
गम्भीरो रूपमन्मथः ॥ १६ ॥ द्विजन्मा परदेशीयः, सर्वविद्याविचक्षणः । पुरोधाः समभूत्तस्य, नाम्ना वेदविचक्षणः ॥ १७ ॥
चलमानोऽन्यदा राज–सदसस्स चतुष्पथे । उपसंव्यानसंव्यान–शबलस्थूलकम्बलाम् ॥ १८ ॥ शिरःस्थद्विनतक्रादि–
भाण्डामाभीरकामिनीम् । काञ्चित्सुरूपामालोक्य, सविषादमचिन्तयत् ॥ १९ ॥ ( युग्मम् ) अनर्हकर्मनेपथ्ये—रिदं

गीरत्नमीदृशम् । कथं विडम्बयामास, रत्नद्वेषी हहा ! विधिः ॥ २२० ॥ इतश्चागान्मदोन्मत्त-स्तत्र राज्ञो मतङ्गजः । आलानस्तम्भमुन्मील्य, निरङ्कुशतया भ्रमन् ॥ २१ ॥ कृतान्तभीषणे तस्मिन्नागच्छति मतङ्गजे। अनेशन् भयविभ्रान्त-मनसः सर्वतो जनाः ॥ २२ ॥ तदाऽऽभीर्यपि नश्यन्ती, काचिच्चान्याम्बुहारिणी । मिथः शरीरसंघट्टा-दुभे अपि निपेततुः ॥ २३ ॥ पतनाद्भाण्डभङ्गेऽथ, समेऽप्याभीरगेहिनी । उदस्थान्निर्विकारास्या, रुदती त्वम्बुहारिणी ॥ २४ ॥ रुदतीमथ तां वीक्ष्य, तस्या दुःखेन दुःखितः । पुरोधाः पृष्टवान् भद्रे !, त्वमित्थं किमु रोदिषी ॥ २५ ॥ सदुःखमवदत्सापि, शृणु यन्मोऽत्र कारणम् । श्वश्रूः स्वभावतो दुष्ट-प्रकृतिर्मयि कुप्यति ॥ २६ ॥ अद्य कुम्भद्वयीभङ्गा-दतीव कुपिता तु सा । प्रवेशं मम सद्मान्त-र्भोजनं च न दास्यति ॥ २७ ॥ वदिष्यति च सा रुष्टा, क्रेष्याम्यत्र घटद्वयम् । तव भोजनमूल्येने-त्येवं दुःखेन रोदिमि ॥ २८ ॥ ततोऽस्यै सदयः कुम्भ-द्वयमूल्यं वितीर्य सः । विस्मितो निर्विकारास्यां, वीक्ष्याभीरीमथावदत् ॥ २९ ॥ दधितक्रादिरद्विश-मत्रभङ्गात्तवाधुना । वह्वी हानिरभूत्तेन, किमु रोदिषि न स्वसः ! ॥ २३० ॥ ईषद्विहस्य साप्याख्यत्, शृणु यन्मोऽत्र कारणम् । अतिदुःखमदुःखं यद्, बहुऋणं न ऋणं यथा ॥ ३१ ॥ तद्वज्रकठिनीभूत-हृदयाऽहं न रोदिमि । अस्या वराक्या किमु हा, महादुःखमिहाऽजनि ! ॥ ३२ ॥ इत्यार्द्रमानसोऽथावक्, पुनस्तां स द्विजाग्रणीः । त्वद्वृत्तं श्रोतुमिच्छामि, स्वसः ! कथय सम्प्रति ॥ ३३ ॥ साप्याह स्वान्यलज्जाकृद् दुश्चरित्रनिदर्शनम् । अनुद्घाटितमेवेदं, निमज्जत्वेव शोभनम् ॥ ३४ ॥ तथापि सर्वदा सर्व-जनीनमनसस्तु ते । वदिष्याम्यन्यदुःखघ्न ! चतुष्कर्णं स्ववृत्तकम् ॥ ३५ ॥ आसन्नवाटयामेतस्यां, परमेहि त्वमेककः । तयेत्यु-क्त्वा तद्वृत्तं, शुश्रूषुः स तथाऽकरोत् ॥ ३६ ॥ उद्भिन्नस्नेहपुलका, संगमेन पुरोधसः । सा विश्वस्तहृदाऽऽचख्यौ, स्ववृत्तमखिलं

इयद्दूरे मे भर्तृ-पुत्रौ हा ! मिलितौ क्वचित् ॥ ५६ ॥ वैदेशिकद्विजेभ्यस्त—च्चेद् ददे स्वर्णमार्थितम् । तावप्यागच्छतो नूनं, तदा लोभेन कर्हिचित् ॥ ५७ ॥ इति सा दातुमारेभे, द्विजेभ्यः स्वर्णमीप्सितम् । सर्वत्र प्रासरत्तस्याः, कीर्तिश्च स्वर्णदानजा ॥ ५८ ॥ ततो दारिद्र्यदूनात्मा, वेदसारोऽपि साङ्गजः । तत्रागत्यान्यदा दत्वा-ऽऽशीर्वादस्तामयाचत ॥ ५९ ॥ किञ्चित्तमुपलक्ष्याथ, प्राच्यप्रेमपणोदिता । कस्त्वं कुतस्त्वमागा वा, का च ते सहचारिणी ॥ २६० ॥ कियच्चास्ति कुटुम्बं ते, किं स्वकीयो लघुस्त्वयम् । इत्येकान्ते निवेश्यैनं, कामलक्ष्मीः स्म पृच्छति ॥ ६१ ॥ ( युग्मम् ) असम्भावनया भूरि—वत्सरातिक्रमेण च । स तामनभिजानानः, स्ववृत्तं वक्ति मूलतः ॥ ६२ ॥ लक्ष्मीतिलकवास्तव्यो, वेदसार-द्विजोऽस्म्यहम् । अभूद्गुणवती काम-लक्ष्मीर्नाम्ना प्रिया तु मे ॥ ६३ ॥ अथैकवार्षिकं पुत्रं, मुक्त्वा वेदविचक्षणम् । वहिर्गतायां नीराय, तस्यामागाद् द्विपद्वलम् ॥ ६४ ॥ वले पश्चाद्गते चाथ, सर्वत्रापि व्यलोकि सा । न प्रापि परमेतस्याः, शुद्धिमात्रमपि क्वचित् ॥ ६५ ॥ ततोऽहं प्रेर्यमाणोऽपि, स्वैः पाणिग्रहसाग्रहैः । तस्याः स्नेहेन नाकार्षम्, पुनः पत्नीपरिग्रहम् ॥ ६६ ॥ ततो मयैव कष्टेन, पालितस्तनयः शिशुः । भाणितोऽथ वयस्थश्च, सर्वा विद्याः स निस्तुषाः ॥ ६७ ॥ प्रसिद्धिं स्वर्णदानोत्थां, तवाकर्ण्य प्रसारिणीं । दारिद्र्यदूनः पुत्रेणानेन सार्द्धमिहागमम् ॥ ६८ ॥ इत्युक्ते वेदसारेण, कामलक्ष्मीर्विषादभाक् । सर्वं स्ववृत्तमप्याख्यत्, पत्ये नृपग्रहादिकम् ॥ ६९ ॥ प्राच्यस्नेहादथाद्यापि, यियासुः सह तेन सा । समर्प्याऽनर्घ्यरत्नानि, रहस्येवमभाषत ॥ २७० ॥ प्रेषय स्वेष्टसङ्केत—स्थाने राज्यान्तरेऽधुना । सुतं रत्नयुतं पश्चा—त्त्वावाभ्यामपि यास्यते ॥ ७१ ॥ सप्तमेऽह्नि श्मशानस्थे, परं चण्डीगृहे निशि । कथञ्चिदहमेष्यामि, तत्रागम्यं त्वयाऽपि च ॥ ७२ ॥ तद्वास्येनाथ प्रैषीत्, स्वेष्टस्थाने सुतं द्विजः । सङ्केतनिशि चागत्य,

चण्डीसद्मनि सुप्तवान् ॥७३॥ राजानमथ धूर्तत्वात्, कामलक्ष्मीर्व्यजिज्ञपत् । स्वामिन् ! स्मरसि यच्चेऽभूच्छिरोऽर्त्तिर्विषमान्यदा ॥ ७४ ॥ तस्यामनुपशान्तायां, मन्त्रतन्त्रैः सभेषजैः । अहं मुक्तान्नपानीया, भृशं व्याकुलतामगाम् ॥ ७५ ॥ ततस्तदुपशान्त्यर्थं, प्रासरन्महिमश्रिये । चण्ड्यै श्मशानभूस्थायै, मेनेऽहमुपयाचितम् ॥ ७६ ॥ यच्छिरोर्तिव्यथाशान्तौ, मयैव सह भूपतिः । तत्रागत्याम्ब ! भवतीं, मदीये पूजयिष्यति ॥७७॥ तदा वामद्य गच्छाव—श्चण्डीमर्चायितुं निशि । तदाज्ञावशवर्तित्वा—च्चानुमेने नृपोऽपि तत् ॥७८॥ ततोऽर्चितायपुश्चण्डी, वाहारूढस्तया समम् । पूजोपहारमादाय, नृपोऽचालीन्निशामुखे ॥ ७९ ॥ तमस्यशूचीभेद्येऽथ, गच्छन्पथि पुरो ददृशे । क्वचित्फेरण्डफेत्कार—रक्षःकोलाहलाकुलम् ॥ २८० ॥ क्वचिद्दनिभीपकोद्योतं, क्वचित्कौशिकवासितम् । क्वचित्प्रेत-परित्रस्त—शवसंस्कारकूजनम् ॥ ८१ ॥ डाकिनीशाकिनीवर्गा—रब्धहल्लीसकं क्वचित् । मुच्यमानाऽट्टहासं च, पिशाचैश्चपलैः क्वचित् ॥ ८२ ॥ क्वचित्कापालिकैर्गृह्य—माणसत्पुण्यमस्तकम् । सर्वतोऽपि च दुर्गन्ध—पूरपूरितनासिकम् ॥ ८३ ॥ उपर्युपरि-पर्यस्त—रुद्रमुण्डस्खलद्द्रुमम् । ददर्श निर्भयो राजा, श्मशानमिति भीषणम् ॥ ८४ ॥ ( पञ्चभि कुलकम् ) कामलक्ष्मी च जानानो, मुग्धामित्थं कविनान् । हृदीषदपि मा भैषी—र्यस्येदं देवि ! दारुणम् ॥ ८५ ॥ निष्पतत्स्खलयन्त्यत्र, भूतप्रेतादयो हि यत् । मुग्धो न वेत्त्यसौ दुष्टा, यत्सा भापयते परान् ॥ ८६ ॥ अथायाते गृहे देव्या, वाहादुत्तीर्य भूपतिः । यावच्चास्याः समभ्यासि, चण्डिकां पूजयन्नभूत् ॥ ८७ ॥ तावच्च च्छलघातिन्या, तया च्छिन्नशिरा ह्यसौ । पपात पुरतश्चण्ड्याः, सर्वाङ्गं प्रणमन्निव ॥ ८८ ॥ आदायाभरणान्यस्य, ततो मुदिताशया । तं मत्तवारणे सुप्तं, द्विजं द्रागुदतिष्ठिपत् ॥ ८९ ॥ भूमिमुक्ताङ्घ्रिरेवाथ, दष्टो दुष्टाहिना हि सः । दुर्दैववशतो यत्र, मृत्युमापच्च तत्क्षणात् ॥ २९० ॥ विपसादोभयभ्रंशात्,

कामलक्ष्मीस्ततो भृशम् । वाहमारुह्य चानेशत्, त्वरितं भयविद्रुता ॥ ९१ ॥ एकाकिन्यापि सा यान्ती, निशि वर्त्मनि निर्जने ।
दुनोऽप्यभैषीन्न स्त्रीणां, साहसं सहजन्म यत् ॥ ९२ ॥ मालिकौकसि वध्वाश्वं, विदेशेऽस्य पुरे क्वचित् । छुटिता वहुभिर्वर्षै-
र्नृपसद्मनियन्त्रणा ॥ ९३ ॥ स्वेच्छाविहारमिच्छन्ती, क्वापि देवकुले निशि । मुरजध्वनिमाकर्ण्य, सा ययौ नाट्यमीक्षितुम् ॥ ९४ ॥
( युग्मम् ) सर्वाङ्गालङ्कृतां दिव्य-रूपसौभाग्यशालिनीम् । नवीनामिव तां तत्र, वीक्ष्य काचित् पणाङ्गनाम् ॥ ९५ ॥ शुभे !
कासि कुतो वात्र, त्वमागाः कस्य चातिथिः । आदरेणेत्यमप्राक्षीत्, सापि कल्पितमित्यवक् ॥ ९६ ॥ ( युग्मम् )
भन्येद्युः श्वशुरकुले, सुन्दरे पितृवेश्मनः । यान्त्यां मयि समं पत्या, पथि धाटी समापतत् ॥ ९७ ॥ लुण्ठिते सार्थसर्वस्वे, पत्यौ च
निहते तथा । नश्यन्तीतस्ततो वाह-मारूढाऽहमिहागमम् ॥ ९८ ॥ स्वजनश्च पुरे नात्र, कश्चिदप्यास्ति मे ततः । आरामिकगृहे वाह-
मारन्याताऽऽगताऽधुना ॥ ९९ ॥ ततो निःस्वामिकामेतां, विभाव्य स्वकुलोचिताम् । मायावचोभिरावर्ज्य, सद्म पण्याङ्गनाऽनयत्
॥ ३०० ॥ शिक्षयित्वा च गीतादि-कलाः सर्वातिशायिनीः । क्रमात्तां स्वकुलाचारे, प्रावर्तत पणाङ्गना ॥ १ ॥ अथ
देशान्तरायातः, समृद्धस्तरुणः पुमान् । आगत्य तस्थिवान् कश्चित्, कामलक्ष्मीगृहेऽन्यदा ॥ २ ॥ सदा सुखैश्च सर्वाङ्गैः, स्वैरं
विलसतोस्तयोः । क्रमेण निबिडः प्रेमा-नुबन्धोऽभूत्परस्परम् ॥ ३ ॥ कियत्यथ गते काले, कार्येणान्यत्र कुत्रचित् । यातुमिच्छु
रहः काम-लक्ष्मीमापृच्छते [illegible] सः ॥ ४ ॥ न गच्छन्म्रियमाणो वा, कश्चित्तिष्ठति केनचित् । न च प्राघुर्णकैर्गेहा, वसन्तीति
जनश्रुतिः ॥ ५ ॥ दृढस्नेहेऽपि तमनो, निषेद्धुं गमनोत्सुकम् । अपारयन्ती विच्छाय-मुखी साऽप्यवदत्तदा ॥ ६ ॥ ( युग्मम् )
स्वामिन् ! स्वकुलगोत्रादि, गच्छन्नपि वदाधुना । त्वद्वियोगे यदेतन्मे, जीवितालम्बनं भवेत् ॥ ७ ॥ ततो निबिडमालिङ्ग्य,

सखेदमवदस्स ताम् । सिञ्चन् भाविवियोगोर्चैः, स्नेहासारैरिवाश्रुभिः ॥ ८ ॥ वेदसारद्विजस्याभू-ल्लक्ष्मीतिलकवासिनः ।
कालक्ष्मीमियोत्पन्नः, पुत्रो वेदविचक्षण ॥ ९ ॥ तस्मिंश्च वार्षिके काम-लक्ष्मीर्याता पुराद् बहिः । अकस्मात्परचक्रास्या-ऽऽगमे
नाऽऽगात्तु सवनि॥३१०॥ ततो न बुध्यते सम्यग्, सा जीवति मृतेति वा । पित्रा च पालितः पुत्रः, सर्वविद्याश्च भाणितः ॥ ११ ॥
अथ दारिद्र्यदूनात्मा, सपुत्रः स द्विजोऽन्यदा । मकरध्वजभूपस्य, प्रेयसीं याचितुं ययौ ॥ १२ ॥ तयाथ सममेकान्ते,
गृहमालोच्य किञ्चन । युक्तं तदर्पिताऽनर्घ्य—रत्नकाञ्चनमौक्तिकैः ॥ १३ ॥ सङ्केतस्थानमादिश्य, मैषीद्राज्यान्तरे
सुतम् । एष्यामि पृष्ठतो धनैः, समाऽऽहरिति चाऽवदत् ॥ १४ ॥ ( युग्मम् ) सङ्केतस्थानमाप्यासौ, पितुर्वर्त्म
व्यलोकयत् । नाऽगात्तु स पिता तस्य, तत्र केनापि हेतुना ॥ १५ ॥ ततः स तनयश्चित्ते, सखेदं समभावयत् ।
नूनं पथि हतश्चौरै-र्व्याघ्राद्यैर्भक्षितः स वा ॥ १६ ॥ अचिन्तयच्च दुःखार्तो, वत्सलं पितरं मम । जहे वियोजयन्नद्य,
सर्वस्वमपि हा ! विधि ॥ १७ ॥ नाऽद्राक्षमत्वां यन्मेऽभून्, वित्तराज्यमेव तत् । दुरात्मना तु दैवेन, न सोढः
सोऽपि साम्प्रतम् ॥ १८ ॥ अथवाऽलमुपालम्भै-र्दैवस्य स्त्रीजनोचितैः । यच्छुभाऽशुभयोर्हेतुः, प्राक्कर्मैव नृणां भवेत् ॥ १९ ॥
संसारे सर्वसंयोगान्, वियोगान्तान् विभावयन् । व्यमुचत् स पितुः शोकं, क्रमेण स्वपमेव सः ॥ ३२० ॥ ततः सर्वत्र चिषाभिः
पूगासत्कारमाप्नुवन् । भ्रमंश्चात्राऽऽगतः सोऽहं, कान्ते ! वेदविचक्षणः ॥ २१ ॥ तद्वृत्तश्रवणादित्थं, ज्ञात्वा स्वाङ्गजमेव तम् ।
कामलक्ष्मीः परं पश्चा-त्तापमाप निजे हृदि ॥ २२ ॥ अचिन्तयच्च धिग् दैवं, यत् पापाया ममाऽधुना । अभूत् स्वाङ्गजसंयोगः,
सर्वमङ्गनिगर्हितः ॥ २३ ॥ इति पापाऽनुतापाऽग्नि-प्रज्वलद्हृदयापि सा । तदा प्रकाशयामास, नात्मानं तनुजन्मने ॥ २४ ॥

पश्चात्तापप्रिदूनात्मा, ज्ञात्वा मां जननीमयम् । प्राणान् कदाचिन्मा त्याक्षी-दिति-स्नेहेन हेतुना ॥ २५ ॥ ( युग्मम् )
तदिङ्गितगुरुवोद्विग्ना-ऽप्यात्मानं सा निगूहितुम् । मिथ्योपचारवचनै-रावर्ज्य व्यसृजच्च तम् ॥ २६ ॥ जीवितोद्विग्नचित्ता सा,
रिमुक्ताञ्जनम्वा ततः । अक्कां काष्ठान्ययाचिष्ट, स्मरन्ती तत् स्वदुष्कृतम् ॥ २७ ॥ अक्काऽप्यवोचद् दुःखार्त्ता, स्वर्लते ! मम
समनः । अकस्मादिदमारब्धं, किं त्वया स्वान्यदुःखकृत् ॥ २८ ॥ किं दोदूयाऽस्ति ते काचि-दाधिव्याधिव्यथाऽथवा ।
यद्वा शुभ्रु ! यदात्मान-मिदानीं होतुमीहसे ! ॥ २९ ॥ किञ्च-दुष्पापं मर्त्यजन्माप्य, किं मुधा गमयस्यदः । भुङ्क्ष्व
भोगानिहायातान्, स्वेच्छया युवभिः सह ॥ ३३० ॥ निष्कलङ्कं नृपैर्मान्यं, सर्वाङ्गसुखसंगतम् । पुनराप्स्यसि कुत्रेदं,
वेश्याजन्म मनस्विनि ! ॥ ३१ ॥ कामलक्ष्मीस्तदाऽवादी-दक्कामन्तर्विषादभाक् । दोदूयाऽस्ति न काप्यम्ब !,
नाधिव्याधिव्यथाऽपि मे ॥ ३२ ॥ किन्त्वस्य सुचिराचीर्ण-पण्यस्त्रीपापकर्मणः । अधुना शुद्धिमिच्छामि, हुत्वाऽऽत्मानं
हुताशने ॥ ३३ ॥ अनन्तांऽहःफलं स्त्रीत्वं, जन्तूनामुच्यते बुधैः । यद्वेश्याजन्म तत्रापि, काञ्जिकं क्वथितं च तत् ॥३४ ॥
इदं सर्व्वंनरतां धीज-मपि वेश्यात्वनुश्च चेत् । शोभनं कथयस्यम्ब !, विरूपं किमु तद्वद ॥ ३५ ॥ सा गर्हणीयं सर्वत्र, पुत्रसं-
भोगदुष्कृतम्, सम्यग्मृतिनिदानं तु, मातुश्चक्रे न लज्जया ॥ ३६ ॥ पौरैर्निवार्यमाणाऽपि, कुट्टिन्या चाथ भूभुजा । न न्यवर्तत
सा काष्ठ-भक्षणाऽध्यवसायतः ॥ ३७ ॥ मरणैकाग्रचित्ता सा, सप्तभिर्लङ्घनैस्ततः । नृपाद्यनुमता दीन-दुःस्थेभ्यो ददती धनम्
॥ ३८ ॥ अथारूढा कृता पौरैः, सरितः पुलिने चिताम् । तत्स्वदुष्कर्मदुःखार्त्ता, प्रविवेशाशु निर्भया ॥ ३९ ॥ ( युग्मम् )
ज्वालितो ज्वलनस्तस्यां, यावत् पार्श्वस्थनागरैः । अकस्मात्तावदेवागाद्, भवितव्यतया घनः ॥ ३४० ॥ तद्धारामहता नीचैः-

कृतास्या इरभा इव । स्वस्थानमगमन् सर्वे, स्वाजन्याभावतस्तदा ॥ ४१ ॥ विध्यातायां तदैवाशु, चितायां ज्वालिता मनाक् ।
जलिन्मुला न सार नद्याः, पूरेणाऽपुाध्यात हुतम् ॥ ४२ ॥ प्लाव्यमाना नदीपार्श्वे, सा दैवाद्यलगत्क्वचित् । दृष्टा गोकुलिना
फेन—लिप्त कण्ठगताऽसुका ॥ ४३ ॥ कामलक्ष्मी ततोऽनैषी—न्निजवेश्म स गोकुली । उपाचरच्च कारुण्या—स्वान्तचित्तः
सदौषधैः ॥ ४४ ॥ दिनैः कतिपयैरस्याः, पटुभूततनोः पुनः । रूपसंपदभूद् दैवा—द्विशेषेणाऽतिशायिनी ॥ ४५ ॥ अथ तां
रूपसौभाग्य—लावण्यललितविग्रहाम् । वीक्ष्य स्मरशरैर्भिन्न—मनाः माह स गोकुली ॥ ४६ ॥ यदि स्थास्यसि मद्गेहे,
सर्वाङ्गशुभगेऽबला । तदा त्वामिह सर्वस्व—स्वामिनी किङ्करस्त्वहम् ॥ ४७ ॥ अथ यास्यसि चेत्प्राणा, अपि यास्यन्ति मे लघु ।
इति ज्ञात्वा शुभे ! सम्यग्, यथारुचि तथाऽबला ॥ ४८ ॥ इति तद्वाक्यमाकर्ण्य, कामलक्ष्मीर्व्यचिन्तयत् । प्रागप्यहोऽर्जितं
महद्—नरकार्हं मया बहु ॥४९॥ तथाऽस्माभीष्टमस्त्वेत—न्निर्निमित्तोपकारिणः । यथाशक्तं पुनस्तद्वत्, पश्चाद्यदाति यत्मया ॥२५०॥
क्लिष्ट—भावाऽहं सर्वस्वभागी, यतनिष्ठापि जीविता । महापापैस्तु तज्जाने, न्यूनैस्तत्पापपूर्त्तये ॥ ५१ ॥ विषयोद्विग्नचित्तापि, चिमृश्ये-
त्यापनेरूपा । किञ्चिदिन्द्रियगणप्रवशात्, साऽभूद्गोकुलिमोहिनी ॥ ५२ ॥ गोदोहदधिमन्थादि—क्रिया गोपगृहोचिताः । संसर्ग-
वशात्सर्वाः, शिक्षते सा शनैः शनैः ॥ ५३ ॥ गोकुलाद् दधितक्रादि, विक्रयाय पुरेऽत्र सा । आयाति प्रत्यहं पापा, दुःखदग्धाऽ
भवत्सा ॥ ५४ ॥ पतिपुत्रवियोगार्त्ता, पत्नी भूत्वा महीभुजः । तमप्यवधिषं प्राच्य—पतिस्नेहवशात्कुधीः ॥ ५५ ॥
पाशैवाप्तभूवं प्राच्य—पतिं वीक्ष्य पलायनं च । वेश्या देशान्तरेऽभूवं, भुजङ्गं चापमङ्गजम् ॥ ५६ ॥ ततश्चितां प्रविष्टाऽहं, प्लाविता
च सरिज्जलैः । गोपाङ्गनाऽधुनाऽभूवं, नर्म्मैः कर्माणि तन्वती ॥ ५७ ॥ इत्थमेतेषु दुःखेषु, पतितेषूत्तरोत्तरम् । भ्रातः ।
...

शोचामि किं दुःखं, साम्प्रतं भग्नभाजना ॥ ५८ ॥ (चतुर्भिः कलापकम्) अतिदुःखमदुःखं यद्, वह्यणं न ऋणं यथा । इत्यतो
ऽस्मि दुर्लोके-र्विषयैर्विधुराशया ॥ ५९ ॥ इति तद्वचमाकर्ण्य, कामलक्ष्मीं स्वमातरम् । एतामेव विदन् वेद-विचक्षणपुरो-
हितः ॥२६०॥ सद्यः स्वजननीभोग-दुश्चरित्रानुतापभाक् । न्यपतत्पदयोस्तस्या, वाष्पाविलविलोचनः ॥६१॥ (युग्मम्) सङ्कोच-
यन्ती चरणौ, साऽप्यवोचत्ससम्भ्रमम् । वर्णोत्तम ! किमारब्ध-मयुक्ताचरणं ह्यदः ॥ ६२ ॥ पुनराख्यत्पुरोधास्तां श्यामवक्त्रः सगद्ग-
दम् । तनयस्ते स एवास्मि, मातर्वेदविचक्षणः ॥ ६३ ॥ अथ तौ ज्ञातसम्बन्धौ, श्यमास्यौ जननीसुतौ । भूमिदत्तदृशौ तत्र,
प्रवेष्टुमिव सस्पृहौ ॥ ६४ ॥ स्वदुर्वृत्तानुतापाग्नि-प्रज्वलन्मनसौ मिथः । व्रीडावेशवशाच्छक्तौ, नापि सन्मुखमीक्षितुम् ॥ ६५ ॥
(युग्मम्) नीराग्निभृगुपाताद्यै-रथ शुद्ध्यै स्वपाप्मनः । आत्मघातं चिकीर्षन्तीं, कामलक्ष्मीमवग् द्विजः ॥ ६६ ॥
मातः ! किमात्मघातेन, किञ्चाऽतीतार्थशोचनैः । यतस्वाऽघविघाताय, तपःकर्मणि साम्प्रतम् ॥ ६७ ॥ यदङ्गी
नाऽऽत्मघातेन, मुच्यते प्राच्यकर्मणः । किन्तु तत्फलभोगेन, तीव्रेण तपसैव च ॥ ६८ ॥ तथा च सिद्धान्तः—
पावाणं च खलु भो कडाणं कम्माणं पुव्विं दुच्चिण्णाणं दुप्पडिक्कंताणं । वेइत्ता मुक्खो नत्थि अवेइत्ता तवसा वा झोसइत्ता । इति
॥ ६९ ॥ ततस्तीव्रं तपःकर्म्म, किञ्चनाऽम्ब ! कुरुष्व तत् । येनात्मा शुध्यति क्षिप्रं, ज्वलनेनैव काञ्चनम् ॥ २७० ॥
सप्तधातुमयादस्मा-दसाराद् मर्त्यवर्ष्मणः । सारमुद्ध्रियते विज्ञै-र्धर्मः शुद्धिकृदात्मनः ॥ ७१ ॥ यतः—आयेरेण
थिरो समलेण निम्मलो परवसेण साहीणो । देहेण जइ विढप्पइ, धम्मो ता किं न पज्जत्तं ॥ ७२ ॥ इत्थं स्वजननीमात्म-
घातात् शान्तियुक्तिभिः । विनिवार्य तया सार्द्धं, पापशुद्धिविधित्सया ॥ ७३ ॥ उद्यानवनमायातान्, श्रुताब्धेः पारदृश्वनः ।

श्रीगुणाकरसूरीशान्, तद्वैयागात् स वन्दितुम् ॥ ७४ ॥ वन्दित्वाऽथ यथास्थानं, तयोस्तत्रोपविष्टयोः । कृपालुमनसस्तेऽपि,
धर्म्ममित्थमुपादिशन् ॥ ७५ ॥ पिता पुत्रः सुहृच्छत्रु–र्भवेच्च जननी जनी । जन्तूनां तत्र नैयत्यं, भवेत्कर्मवशात्मनाम् ॥ ७६ ॥
प्रत्येकं जनिता जीवाः, सर्वेऽप्येकेन जन्तुना । लालिताः पालिताश्चात्रा–ऽपत्यस्नेहादनन्तशः ॥ ७७ ॥ तथैव जन्तवः
सर्वेऽप्येकजीवेन भूरिशः । क्रोधोद्बोधाद्धताः स्वाङ्ग–पुष्टये भक्षितास्तथा ॥ ७८ ॥ तत्कश्चिद्वस्तुतो नास्ति, स्वः परो वाऽत्र कस्यचिद् ।
पापं मुधैव हा ! राग–द्वेषाभ्यामर्ज्यते जडैः ॥ ७९ ॥ संसारे सर्वसंबन्धा–नैयत्येनेत्थमाङ्गिनाम् ।, मिथ्याऽपत्यादिषु प्रेम्णा मुह्यन्ति
न विवेकिनः ॥ ८० ॥ रम्यमेकस्य यज्जातु, द्वेष्यमेकस्य तत्पुनः । रम्यारम्यव्यवस्थाऽपि, तन्न वस्तुषु वास्तवी ॥ ८१ ॥ यदुक्तम्—
स्वस्थे हृदि सुधासिक्तं, दुःखे विषमयं जगत् । वस्तु रम्यमरम्यं वा, मनःसङ्कल्पतस्ततः ॥ ८२ ॥ रागद्वेषव्यपोहेन, ततो
निखिलवस्तुषु । समतां ममताहीना, भजन्ते भवभीरवः ॥ ८३ ॥ इत्याकर्ण्य भवोद्विग्नौ, प्रव्रज्याग्रहणोत्सुकौ । तौ मातृतनयावित्थं
भणितौ गुरुभिः पुनः ॥ ८४ ॥ शुद्धे कुड्ये यथा लेख्यं, शोभाऽतिशयमश्नुते । सम्यगालोचनाशुद्धे, व्रताऽऽरोपस्तथाऽङ्गिनि
॥ ८५ ॥ ततो मनोवचःकायै–राजन्माऽर्जितमप्यघम् । प्रागालोचयतं सम्य–क्प्रव्रज्यासाग्रहौ शुभाम् ॥ ८६ ॥ ततो याद्दिहितं
राग–द्वेषाभ्यां दुष्कृतं यथा । सम्यगालोचितं ताभ्या–मवाच्यमपि तत्तथा ॥ ८७ ॥ प्रवर्द्धमानसंवेगौ, निश्छद्ममनसौ च तौ ।
प्रायश्चित्ततपो दत्त्वा, दीक्षितौ गुरुभिस्ततः ॥ ८८ ॥ निर्निदानं तपोऽच्छत्र, तप्यमानाऽथ दुस्तपम् । अप्रमत्ता जिनोपज्ञा–ऽनुष्ठा-
नेषु निरन्तरम् ॥ ८९ ॥ विहृत्य सह साध्वीभिः; क्षामलक्ष्मीश्चिरं भुवि । क्षिप्त्वा चाऽशेषकर्माणि, जगाम परमं पदम् ॥ ३९० ॥
( युग्मम् ) चङ्गसंवेगरङ्गोऽथ, मुनिर्वेदविचक्षणः । वद्युक्तः पञ्चधाऽऽचारं, निरतिचारमाचरन् ॥ ९१ ॥ सूत्रतश्चाऽर्थतः सर्वां,

द्वादशाङ्गीमधीतवान् । षट्त्रिंशता गुणैः सूरि–पदाऽर्हश्चाऽजनि क्रमात् ॥ ९२ ॥ आचार्यपदमासाद्य, स ततो विरहन् क्षितौ । प्रतिबोधयितुं प्राणि–धर्ममेवमुपादिशत् ॥ ९३ ॥ श्लाघ्याः सुकृतिनस्तेऽत्र, ये बालब्रह्मचारिणः । संसारमोहमुत्सृज्य, सर्वचारित्र-माश्रिताः ॥ ९४ ॥ श्लाघ्या एव हि तेऽप्यत्र, प्रमेयासादिता न यैः । लोकद्वयविरुद्धार्था–ऽऽचरणाद् वचनीयता ॥ ९५ ॥ अथवा–कस्य स्यान्न स्खलितं, पूर्णाः सर्वे मनोरथाः कस्य । कस्येह सुखं नित्यं, दैवेन न खण्डितः को वा ॥ ९६ ॥ इति न्यायेन केचिच्च, प्रेरिताः प्राच्यकर्मभिः । निषिद्धान्यपि कृत्यानि, रचयन्त्यत्र कर्हिचित् ॥ ९७ ॥ परं तच्छुद्धिमिच्छन्तः, सम्यगालोच्य सद्गुरोः । तन्वते चेत्तपस्तीव्रं, श्लाघ्याः स्युस्तेऽपि निश्चितम् ॥ ९८ ॥ आसन्ने स्वाऽन्तकालेऽथ, क्षमयित्वा-खिलाङ्गिनः । सत्पादपोपगमना–ऽनशनं प्रतिपद्य च ॥ ९९ ॥ युगपत् सर्वकर्माणि, क्षिप्त्वा ध्यानतपोबलात् । अन्तकृत्केवली जज्ञे, सूरिर्वैदविचक्षणः ॥ ४०० ॥ कामलक्ष्मीः पुरोधाश्च, कृत्वा दुष्कर्म गुर्वपि । तपोभिरेवं गुरुभिर्जातौ गुरुतरौ पुनः ॥ १ ॥ पर्तुं क्षालयितुं शक्ता, महान्तः पापकर्म तत् । नीचास्तु कर्तुमेवाऽलं, जानीतेत्थं शुभाशयाः ! ॥ २ ॥ अथ पुण्योपदेशैस्तौ, रुद्रदेवार्पिङ्गरौ । प्रतिबोध्य चिरं भव्यान्, प्रयातौ परमं पदम् ॥ ३ ॥ इत्येकैककपायस्य, विपाकं विरसं विदन् । द्राक् कपाय-कुटुम्बेऽत्र, श्रयेत् कश्चतुरोऽपि तान् ॥ ४ ॥ निर्मलधभूत् कुमाराणां, कपायोपशमात्मनः । उपदेशात् प्रभोरेवं, पयोऽगस्त्योदयादिव ॥ ४०५ ॥ इति श्रीसोमसुन्दरसूरिपट्टप्रभाकरपरमगुरुश्रीमुनिसुन्दरसूरिविनेयवाचनाचार्य–सोममण्डनगणिकृतायां श्री–युगादिजिन-देशनायां प्रथम उल्लासः ॥

---

# अथ द्वितीयोल्लासः प्रारभ्यते ॥

निष्ठाप्य परमब्रह्म—पदनिष्ठो निरञ्जनः । आसीद्यता जगज्ज्येष्ठो, नाभिजन्माऽस्तु नः श्रिये ॥ १ ॥ अथाऽन्तरे प्रभोः पुत्रः, कुरूणामधिपः कुरुः । तातं विज्ञपयत्येवं, ललाटघटिताऽञ्जलिः ॥ २ ॥ विपाकं कर्मणामित्थं, स्वय्यऽप्यादिशितीशिनः । किमपत्यादिकप्रेम—पाशाः परमदुस्त्यजाः ॥ ३ ॥ एकतो दुर्जयो मोहो, भवभीरन्यतस्तु नः । हा व्याघ्रदुस्तटीन्यायो, विषमोऽयं समापपौ ॥ ४ ॥ अथ चाल्यत् प्रभुर्वत्सा—स्तुच्छं वैषयिकं सुखम् । अनित्यं च भवेत्तत्तु, नित्यमात्यन्तिकं शिवे ॥ ५ ॥ शुभाऽशुभगती जीवः, प्रेत्य याता तु यत्र यः । मनोवचःकायचेष्टा, संभवेत्तस्य तादृशी ॥ ६ ॥ यदुक्तम्—ठाणं उच्चुच्चयरं, मज्झं हीणं च हीणतरगं वा । जेण जहिं गंतव्वं, चिट्ठावि से तारिसी होइ ॥ ७ ॥ कर्मानुभावजनितं, सौम्याः ! संवेगकारणं । पञ्चानामथ जीवानां, वृत्तमत्र निदर्शनं ॥ ८ ॥ तथाहि—अतीवत्रासंसंकीर्णे, संसारपुरपत्तने । आसन् पञ्च कथाशेष—पितरः कुलपुत्रकाः ॥ ९ ॥ अभव्यो दूरभव्यश्च, भव्यश्चासन्नसिद्धिकः । तेषां तद्भवसिद्धिश्च—त्यभिधाः क्रमतोऽभवन् ॥ १० ॥ इतश्चासन्निरपपू—स्तिर्यग्पूर्नरपूस्तथा । सुरपूः सिद्धिपूश्चेति, पुर्यः पञ्चातिविश्रुताः ॥ ११ ॥ महामोहोऽतिमोहश्च, संमोहो मोहनामकः । क्षीणमोहश्च पञ्चाऽमी, तत्रासन् सार्थनायकाः ॥ १२ ॥ एतेषां नरकगतिः, क्रमात्तिर्यग्गतिस्तथा । नृगतिः स्वर्गतिः

सिद्धि—गतिश्चेत्यभवन् सुताः ॥१३॥ लात्वा निजनिजां कन्यां, ते पश्चाप्युचितं वरं । मार्गयन्तोऽथ सर्वत्र, संसारपुरमाययुः ॥१४॥
अभव्यादीन् मिथो धर्म-विचारं सृजतोऽथ तान् । वीक्ष्य ते किं ब्रुवन्तीति, निकटीभूय शुश्रुवुः ॥ १५ ॥ अभव्यो न्यगदत्तत्र,
पुण्यपापे तयोः फलं । भोक्ता मेत्यगतिर्जीवो, बन्धमोक्षौ च सन्ति न ॥ १६ ॥ शीतोष्णातापनालोच—मलधृत्यादिका व्यथाः ।
सोढा धर्मधियाप्येताः, कायक्लेशाय केवलम् ॥ १७ ॥ क्षुधो मृतिस्तपःकर्म, मव्रज्या भोगवञ्चना । देवाग्रर्चा व्ययोऽर्थस्य, दम्भो
मौनजटाकृतिः ॥ १८ ॥ धूर्तैर्धर्मकथाख्यानं, मुग्धलोकमतारणं । स्वेच्छया तेन सेव्यन्ते, विषयास्तात्त्विका इति ॥ १९ ॥
अथेन्द्रियसुखत्यागा-दत्रोऽमुत्र सुखाय यः । उड्डाप्य स्वकरात्पाश—रचना सानु पक्षिणः ॥ २० ॥ तद् भुज्यते यथामांसं, पीयते
परिधीयते । इष्टोऽयमेव मे धर्मो, दूरभव्यो जगाविति ॥ २१ ॥ भव्यश्चोवाच तत्रैवं, धर्माधर्मौ सुशोभनौ । अर्थोऽपि सेव्यमानौ
द्वे—नैकासक्तैस्तु भूतले ॥ २२ ॥ आसन्नसिद्धिकश्चाह, धर्मः सर्वार्थसाधनं । प्रधानं पुरुषार्थेषु, सेव्यः सद्भिः सदाद्यतैः ॥ २३ ॥
आजीवाद्यर्थमुद्योगो, गृहिणां युज्यते परं । ऐहिकेष्वपि कार्येषु, द्वित्रयामान् मनागिति ॥ २४ ॥ तत्रानवद्यधीश्चाख्य—दित्थं
तद्भवसिद्धिकः । सेवितः सर्वदोद्युक्तैः, पुरुषैरुत्तमोत्तमैः ॥ २५ ॥ अत्रामुत्र शुभोदर्कः, सर्वसावद्यवर्जनात् । सेवनीयः सदा
साधु—धर्म एव हितार्थिभिः ॥ २६ ॥ (युग्मम्) वाक्यानुसारतस्तेषां, पञ्चानामपि पञ्च ते । क्रमेण स्वस्वकन्याया, उचिता
रुचिता वराः ॥ २७ ॥ ऊचुस्ते तांश्च युष्मभ्यं, दद्मो निजसुताः परं । एतदाज्ञावशैर्भाव्य-मिति तैः संश्रुतं च तत् ॥ २८ ॥
तत्राऽभव्यो महामोह—तनयां नरकां गतिम् । अतिमोहाङ्गजां दूर—भव्यस्तिर्यग्गतिं तथा ॥ २९ ॥ पर्यणैषीच्च नृगतिं, भव्यः
संमोहनन्दिनीं । मोहस्य तनयां स्वर्ग—गतिं चासन्नसिद्धिकः ॥ ३० ॥ क्षीणमोहसुतं सिद्धिं, पुनस्तद्भवसिद्धिकः । अनुरूपमिया-

र्यंत्रं, भृशं प्रमुदिताश्च ते ॥३१॥ ( त्रिभिर्विशेषकम् ) वधूवरोचितस्नेह–संबन्धभीतचेतसः । महामोहादयोऽप्यस्थुस्तत्र जामातृसन्निधौ ॥३२॥ अथाऽभव्यादयः पञ्च, स्वस्ववल्लभया समम् । सेव्यमानाः सदा सौख्यं, निन्युर्बहुमनेहसं ॥३३॥ अन्येद्युः पञ्चभिः पोतै–र्वित्तोपार्जनहेतवे । विधाय सर्वसामग्रीं, नानाभाण्डसमन्विताः ॥ ३४ ॥ पञ्चापि ते सपत्नीकाः, कृतकौतुकमङ्गलाः । शुभेऽहनि शुभोत्साहा, रत्नद्वीपं प्रतस्थिरे ॥ ३५ ॥ तेषां पोतेषु वेगेन, सागरान्तर्गतेष्वथ । तद्भाग्यमिवोदग्र–मुदभूदभ्रमम्बरे ॥ ३६ ॥ उल्काभैर्विद्युदुद्योतै–र्मिर्घातोर्जितगर्जितैः । अदृश्यात्मभुजैरन्ध–तमसैर्व्यानशे नभः ॥ ३७ ॥ विमुच्य जीवितव्याशां, केचित्पोत–जनास्तदा । अत्राऽमुत्र शुभोदर्कां, व्यधुर्देवगुरुस्मृतिम् ॥ ३८ ॥ धनपुत्रकलत्रादि–व्यामूढमनसः परे । मृत्युमागतमालोक्य, मुमूर्च्छुः कातराः परे ॥३९॥ मुशलप्रमिता वारि–धारा धाराधरः किरन् । तत्क्षणात्तद्भाग्येन, पोतान् पूरितवान् जलैः ॥४०॥ असाधितेहिताः पुण्य–हीनस्येव मनोरथाः । तेषां पञ्चाप्यगुः पोताः, सद्यः स्मरणशेषताम् ॥४१॥ यानपात्रजनः सर्वैः, सामुदायिककर्मणा । तत्क्षणान्मृत्युमापन्न–स्तत्र हाहारवं सृजन् ॥ ४२ ॥ अभव्याद्याश्च पञ्चापि, तत्र स्वस्वप्रियायुताः । प्रापुः फलकमेकैकं, भवितव्यतया तदा ॥ ४३ ॥ आहन्यमानाः कल्लोलै–रतिलोलैरितस्ततः । भक्ष्यमाणाश्च सर्वत्र, तिमिङ्गिलगिलादिभिः ॥ ४४ ॥ अथाब्धि फलकैस्तैस्ते, दिनैरुत्तीर्य सप्तभिः । दैवात् पञ्चापि कन्थारि–कुडङ्गं द्वीपमाययुः ॥ ४५ ॥ इत्यूचुः समदुःखास्ते, हृष्टाश्चैकत्र सङ्गमे । जागर्त्यद्यापि नः पुण्यं, येनैवं मिलिता वयम् ॥ ४६ ॥ विविक्ताङ्गास्थितिस्थानं, वीक्ष्यमाणाश्च सर्वतः । पञ्चापि ददृशुः पञ्च, कुडङ्गान् नीलयाकृतीन् ॥ ४७ ॥ कपिकच्छुकुडङ्गान्त–स्तत्राभव्यः स्म तिष्ठति । समं नरकगत्याख्य–कान्तया मुदिताशयः ॥ ४८ ॥ दूरभव्यस्तु कन्थारि–कुडङ्गे स्वप्रियासखः । बदरीकुडङ्गे भव्यो, नृगत्या सह चावसत् ॥ ४९ ॥

न्मार्गगत्या प्रणयिन्या, सममासन्नसिद्धिकः । काकोदुम्बरिकास्फार-कुडङ्गे न्यवसत्पुनः ॥ ५० ॥ प्रेयस्या सिद्धिगत्याथ, समं
तद्भव्यसिद्धिकः । तत्रैव करणीसार-कुडङ्गं वासमातनोत् ॥ ५१ ॥ आश्रयाप्त्येति ते पत्र किञ्चिन्निर्वृत्तचेतसः । खादिराम्भः
पपुस्तत्र, तृषिताः पल्वले क्वचित् ॥ ५२ ॥ क्षुधितास्ते कपित्थादि-फलैरतिपचेलिमैः । सदा तत्र सपत्नीकाः, प्राणवृत्ति-
मकल्पयन् ॥ ५३ ॥ आर्यौ द्वौ तत्र मुदितौ, मन्येते सुतरां सुखम् । सुखं दुःखं च नो भव्यो, दुःखं चासन्नसिद्धिकः ॥ ५४ ॥
दुःखं त्वतिनरामेक-स्तत्र तद्भव्यसिद्धिकः । तत्रानुकूलवातेना-न्यदा पल्लविता द्रुमाः ॥ ५५ ॥ अभव्योऽवग् विलोक्यैता-निति
पुष्पफलोद्गमः । अचिरादेषु भाविता, तन्नः शुभमुपस्थितम् ॥ ५६ ॥ दूरभव्योऽथ तद्वाक्य-मनुमेने प्रमोदभाक् । भव्यः
पुनस्तदाकर्ण्य, नाभूद्दर्पविषादभाक् ॥ ५७ ॥ अदोऽपि चेन्मुदः स्थानं, विषादस्य तदा किमु । इत्याहतुः पुनस्तत्रा-
सन्नतद्भव्यसिद्धिकौ ॥ ५८ ॥ अथ ते भग्नबोहित्था-भिज्ञानं तत्र पादपे । निबध्य स्वकुडङ्गांस्ता-स्त्रायमाणाः स्थिताः
सुखम् ॥ ५९ ॥ सांयात्रिकः सुचित्ताख्य-स्तदभिज्ञानदर्शनात् । भग्नप्रवहणः कश्चिद्, द्वीपेऽत्रास्तीति बुद्धवान् ॥ ६० ॥ तदैव
नावमादाय, तदानयनहेतवे । कृपालुहृदयस्तत्र, नरान् प्रेषितवानसौ ॥ ६१ ॥ सांयात्रिकस्वरूपं ते-रुक्त्वा ते भणिता इति ।
द्वीपे दुःखनिवासेऽस्मिन्, वसन्तो मा विनश्यत ॥ ६२ ॥ एतत्सद्योऽम्बुधेस्तीरं, प्रापयामः सुखेन वः । तत्राभाणीदभव्यो भो,
मृत दुःखं किमत्र नः ॥ ६३ ॥ पश्यतात्र स्वयं सिद्धः, कुडङ्गः सदनं वरम् । तथा पुष्पफलादीनि, संपद्यन्ते सुखेन नः ॥६४॥
सतत्वर्द्धिश्चाभिमुख्या-धुना पल्लवितद्रुषु । पत्नीयं च सदासन्ना, हृद्यानन्ददायिनी ॥ ६५ ॥ अम्बुधेस्तटमासाद्य-मतः
किमधिकं सुखम् । किञ्च जीवितसन्देहो, जलवर्त्मनि गच्छताम् ॥ ६६ ॥ द्वीपोऽयं शोभनस्तेन, नागमिष्याम्यहं तटम् । तद्वाक्यं

नरकगती–ष्वनुमेने प्रमोदभाक् ॥ ६७ ॥ आगमिष्याम्यहं तीरं, परं चिरतरेण भोः । दुरभव्ये वदत्येवं, पत्नी तिर्यग्गति-
जगौ ॥ ६८ ॥ ममैवाभिमतं नाथ, भवान् साधूक्तवानिदम् । अवादीच्चेति भव्यस्तान्, भद्रा ! गच्छत संप्रति ॥ ६९ ॥
आगन्तास्मि तटं येन, वर्षैः कतिपयैरहम् । प्रतिशुश्राव तद्वाक्यं, तत्पत्नी सुगतिस्तदा ॥ ७० ॥ वत्सरेणाहमागन्ते—त्याख्य-
दासन्नसिद्धिकः । तस्य स्वर्गगतिः पत्नी, युक्तमेतत्प्रियेत्यवक् ॥ ७१ ॥ अहो प्रकृतिसादृश्यं, दम्पतीनामिहेक्ष्यते । यथा
मनोवचःकायै—स्तथा नान्यत्र वीक्षितं ॥ ७२ ॥ दूरान्मिलति दम्पत्योः, संयोगः सदृशोऽत्र यत् । गुणरूपप्रकृत्याद्यै-
स्तद्विधिरेव कौशलम् ॥ ७३ ॥ उक्तं च–वत्तिल्लो विहिराया, जाणइ दूरोवि जो जहिं वसइ । जं जस्स होइ सारिसं,
तं तस्स विइज्जिअं देइ ॥ ७४ ॥ चिन्तयद्भिर्मनस्येवं, चतुरस्तानपेक्ष्य तैः । किं कर्तासि त्वमित्युक्त-
स्तत्पत्तद्भवसिद्धिकः ॥ ७५ ॥ विना कालविलम्बेन, भो निष्कारणबान्धवाः । दुरन्तव्यसनाम्भोधे–र्निस्तारयत मामितः ॥ ७६ ॥
मधुलिप्तासिधाराग्र—ग्रसनमतिमं ह्यदः । स्थानं बहुविधापाय—मतितुच्छसुखं च यत् ॥ ७७ ॥ इति प्रियोक्तिमाकर्ण्य, पत्नी
सिद्धिगतिः पुनः । प्राणेश ! रोचते मह्य—मप्येवं मुदिता जगौ ॥ ७८ ॥ समियस्तैर्नरैः सार्धं, ततस्तद्भवसिद्धिकः । नावमारुह्य
वेगेना—यासौ सांयात्रिकान्तिकम् ॥ ७९ ॥ तस्य सत्त्वसमाख्यायो—त्तीर्य तेन सहाम्बुधिम् । मिलितः सुहृदादीनां, सोऽभूच्च
सुखितश्चिरम् ॥ ८० ॥ वत्साः ! सांप्रतमाख्यातो, दृष्टान्तस्तावदेष वः । एतस्योपनयः सम्यगुच्यमानो निशम्यताम् ॥ ८१ ॥
अत्रोदिता अभव्याद्या, ये भद्र कुलपुत्रकाः । जानीत पञ्चधा जीवा–स्तान् पञ्चगतिगामिनः ॥ ८२ ॥ आकीर्णः परितो जन्म-
जरामृत्युरुजादिभिः । अयं दुरन्तः संसार—पारावारः स्मृतो बुधैः ॥ ८३ ॥ दुःखदारिद्र्यदौर्भाग्य—रोगोद्वेगादिसङ्कुलम् ।

मर्त्यजन्म च कन्थारि-कुडङ्गद्वीपसन्निभम् ॥ ८४ ॥ सदा दुर्वैकवेधत्वा-त्तिर्यग्नारकदुर्गती । ते कन्थारिकपिकच्छु-कुडङ्गप्रतिमे
स्मृते ॥ ८५ ॥ मिथे पापोदयेनैते, सम्पद्येते तनुमताम् । एतयोः प्रतिबन्धस्तु, प्रायः पापात्मनो भवेत् ॥ ८६ ॥ मर्त्याऽमर्त्यगती
नात, सुखदुःखोभयात्मके । बदरोदुम्बरस्कार-कुडङ्गसन्निभे मते ॥ ८७ ॥ मध्यमैः सुकृतैश्चैते, मिथे सम्भवतोऽङ्गिनाम् । मध्यमानां
भवेत्प्रायो, व्यासङ्गः पुनरेतयोः ॥ ८८ ॥ उत्तमानां भवेत् प्रायः, प्रतिबन्धस्तु वस्तुतः । एकान्तात्यन्तसौख्याय्यो, महोदयगतौ
सदा ॥ ८९ ॥ आधिव्याधिवियोगादि-दुःखादृसन्ति मोहतः । फलतुल्यानि डिम्भानि, स्थितास्ते नाजन्मानि ॥ ९० ॥
...त्रिकसुविचाभो, धर्माचार्योऽत्र बुध्यताम् । निर्यामकनराभाव, साधवो धर्मदेशकाः ॥ ९१ ॥ यदुक्तम्-प्राणिनोऽपारसंसार-
पारेऽत्र मज्जतः । तारयन्ति ततो वाचं-यमा निर्यामकाः स्मृताः ॥ ९२ ॥ नौस्थानीया त्वसावद्या, प्रव्रज्या पारमेश्वरी ।
...त्यान्तिरसुखं नात, निर्वाणं तदसन्निभम् ॥ ९३ ॥ दयत्त्रिकसमा मैत्री, चातुर्गतिकजन्तुषु । साधुभिर्भोगिताः पश्चा-द्येते समुदिता
इति ॥ ९४ ॥ पथेककाकिनीहेतो-र्निष्पुण्यः कश्चिदध्वगः । रूपकाणां पुरा मार्ग, सहस्रं निरजीगमत् ॥ ९५ ॥ आस्वाद्याम्रफलं
...प्रपन्नं च यथा पुरा । भ्रंशमाप नृपः कश्चित्, स्वजीवितनृपश्रियाम् ॥ ९६ ॥ अत्र तुच्छेन्द्रियसुखा-सक्ताः केचिज्जडास्तथा ।
... सुखं स्वर्गाऽपवर्गयोः ॥ ९७ ॥ जुगुप्सनीयान् भो । भोगान्, तुच्छान् शुक्रादिसम्भवान् । विमुच्याराध्यतां
निर्वृतिः ॥ ९८ ॥ इति साधूक्तमाकर्ण्या-ऽभव्यः प्राह हसन्निति । निर्वृतिः कीदृशी सा च, दृष्टा केनाऽत्र
९९ ॥ अत्रायं विषयग्रामः, सर्वेन्द्रियसुखावहः । घृतपूराज्यपक्वान्न-खर्जूराद्यं च भुज्यते ॥ १०० ॥ वसनाभरणाद्यत्र,
परिधीयते । नीयते च सुखं कालः, क्रीडाहास्यकुतूहलैः ॥ १ ॥ एतेषां नैकमप्यस्ति, यत्र तत्राऽपुनर्भवे । को नु

दुःखात्मके तत्त्वा- दात्मनीनो यियासति ॥ २ ॥ अयमत्यैवमेकान्त—सुखमप्यपुनर्भवम् । गर्ताशूकरवन्नित्या—सक्तो विषयकर्दमे
॥ ३ ॥ आधिव्याधिजराजन्म—मरणादिभिरर्दितः । भ्रमिताऽनन्तसंसारे, स वराको निरन्तरम् ॥४॥ (युग्मम्) । तथैव दूरभव्योऽवग्,
पिथस्ये च त्वदीरितम् । परिणामहितं किन्तु चिरेणैवाऽधुना न यत् ॥ ५ ॥ यौवनं धनसंपत्तिः, पत्नी च्छन्दानुवर्त्तिनी । नीरोगं
चाङ्गमित्यादि, माप्समुज्झेत् कथं सुधीः ॥ ६ ॥ यौवने यत्र धर्मार्थं, पञ्चेन्द्रियसुखोज्झनम् । सुध्यस्तां पीलुकालास्य—पाकोक्तिसदृशं
तु तत् ॥ ७ ॥ कालान्तरे तथैवोक्तः, कृपया साधुपुङ्गवैः । तेने माक्तनजातीय—मेवोत्तरमसौ पुनः ॥८॥ एवमालम्बनैः सत्या—
ऽसत्यैः साधून् मतारयन् । वराको दूरभव्योऽपि, न धर्मं प्रतिपद्यते ॥ ९ ॥ मायो नरकतिर्यक्षु, जातु मर्त्याऽमरेष्वपि । पदे पदेऽथ
दुःखार्त्तो, भ्रान्त्वाऽनन्तमनेहसम् ॥ ११० ॥ यथाप्रवृत्तकरणा—द्विवरं प्राप्य कर्मणः । सम्यग्गुरूपदेशेन, स धर्मं प्रतिपत्स्यते ॥११॥
(युग्मम्) । सम्यगाराधयन् धर्मं, भवैः कतिपयैस्ततः । निर्दह्याऽशेषकर्माणि, स सिद्धिसुखमाप्स्यति ॥ १२ ॥ भव्यश्चोवाच तत्रैवं,
करिष्ये मुक्तिकाम्यया । युष्माभिरुदितं धर्मं, परं सप्ताऽष्टवत्सरैः ॥ १३ ॥ यत्साधानाऽधुना पत्नी, बालश्चापाठितः सुतः ।
सुता नोद्वाहिताऽद्यापि, तद् द्राग् मोक्तुं न शक्यते ॥ १४ ॥ विभाव्य योग्यतां वर्षैः, सप्ताष्टैरथ साधुभिः । तपस्यामार्हतीं भद्र!,
भजस्वेत्युदितः पुनः ॥ १५ ॥ प्रतिपद्यार्हतं धर्मं, स संवेगतरङ्गितः । सप्ताष्टैः सुभवैः . कर्म—निर्मुक्तः
शिवमाप्स्यति ॥ १६ ॥ श्रुत्वा साधुवचश्चाख्य—देवमासन्नसिद्धिकः । रोचते भवदुक्तं मे भृशं पीयूषपानवत् ॥ १७ ॥
परं नियन्त्रितो जाया—पत्यादिप्रेमबन्धनैः । मुमुक्षुरपि गार्हस्थ्यं, सहसा मोक्तुमक्षमः ॥ १८ ॥ तद्वियोज्य
प्रियाऽपत्य—प्रतिबन्धं शनैः शनैः । करिष्यामि भवद्वाक्यं, परमागामिवत्सरे ॥ १९ ॥ आगामिवत्सरे जात—श्रद्धः

मर्त्यजन्म च कन्थारि-कुडङ्गद्वीपसन्निभम् ॥ ८४ ॥ सदा दुःखैकवेद्यत्वा-त्तिर्यग्नारकदुर्गती । ते कन्थारिकपिकच्छु-कुडङ्गप्रतिमे स्मृते ॥ ८५ ॥ प्रिये पापोदयेऽनन्ते, सम्पद्येते तनुमताम् । एतयोः प्रतिबन्धस्तु, प्रायः पापात्मनां भवेत् ॥ ८६ ॥ मर्त्याऽमर्त्यगती चात्र, सुखदुःखोभयात्मके । यदुदुम्बरस्फार-कुडङ्गसन्निभे मते ॥ ८७ ॥ मध्यमैः सुकृतैश्चैते, प्रिये सम्भवतोऽङ्गिनाम् । मध्यमानां भवेत्प्रायो, व्यासङ्गः पुनरेतयोः ॥ ८८ ॥ उत्तमानां भवेत् प्रायः, प्रतिबन्धस्तु वस्तुतः । एकान्तात्यन्तसौख्यायां, महोदयगतौ सदा ॥ ८९ ॥ आधिव्याधिवियोगादि-दुःखाद्रसन्ति मोहतः । फलतुल्यानि डिम्भानि, स्थितास्ते नरजन्मनि ॥ ९० ॥ सांयात्रिकसुविलाभो, धर्माचार्योऽत्र बुध्यताम् । निर्यामकनराभाश्च, साधवो धर्मदेशकाः ॥ ९१ ॥ यदुक्तम्-प्राणिनोऽपारसंसार-पारावारेऽत्र मज्जतः । तारयन्ति ततो वाचं-यमा निर्यामकाः स्मृताः ॥ ९२ ॥ नौस्थानीया त्वसावद्या, प्रव्रज्या पारमेश्वरी । आत्यन्तिकसुखं चात्र, निर्वाणं तटसन्निभम् ॥ ९३ ॥ दधद्भिरुत्तमां मैत्रीं, चातुर्गतिकजन्तुषु । साधुभिर्भणिताः पश्चा-त्येते समुदिता इति ॥ ९४ ॥ यथैककाकिनीहेतो-र्निष्पुण्यः कश्चिदध्वगः । रूपकाणां पुरा प्राप्तं, सहस्रं निरजीगमत् ॥ ९५ ॥ आस्वाद्याम्रफलं तुच्छ-मपथ्यं च यथा पुरा । भ्रंशमाप नृपः कश्चित्, स्वजीवितनृपश्रियम् ॥ ९६ ॥ अत्र तुच्छेन्द्रियसुखा-सक्ताः केचिज्जडास्तथा । हारयन्ति हहाऽमुत्र, सुखं स्वर्गाऽपवर्गयोः ॥ ९७ ॥ जुगुप्सनीयान् भो ! भोगान्, तुच्छान् शुक्रादिसम्भवान् । विमुच्याराध्यतां धर्मः, प्राप्यते येन निर्वृतिः ॥ ९८ ॥ इति साधूक्तमाकर्ण्या-ऽभव्यः प्राह हसन्निति । निर्वृतिः कीदृशी सा च, दृष्टा केनाऽत्र कथ्यताम् ॥ ९९ ॥ अत्रायं विषयग्रामः, सर्वेन्द्रियसुखावहः । घृतपूराज्यपक्वान्न-खर्जुराद्यं च भुज्यते ॥ १०० ॥ वसनाभरणाद्यत्र, स्वेच्छया परिधीयते । नीयते च सुखं कालः, क्रीडाहास्यकुतूहलैः ॥ १ ॥ एतेषां नैकमप्यस्ति, यत्र तत्राऽपुनर्भवे । को नु

दुःखात्मके तस्मा- दात्मनीनो यियासति ॥ २ ॥ अयमत्यैवमेकान्त—सुखमप्यपुनर्भवम् । गर्ताशूकरवन्नित्या—सक्तो विषयकर्दमे ॥ ३ ॥ आधिव्याधिजराजन्म—मरणादिभिरर्दितः । भ्रमिताऽनन्तसंसारे, स वराको निरन्तरम् ॥४॥ (युग्मम्) । तथैव दूरभव्योऽन्यग्, विधास्ये च त्वदीरितम् । परिणामहितं किन्तु चिरेणैवाऽधुना न यत् ॥ ५ ॥ यौवनं धनसंपाचेः, पत्नी च्छन्दानुवर्तिनी । नीरोगं शाड्ग्यमित्यादि, मासमुज्झेत् कथं सुधीः ॥ ६ ॥ यौवने यच्च धर्मार्थ, पञ्चेन्द्रियसुखोज्झनम् । बुध्यतां पीलुकालास्य—पाकोक्तिसदृशं तु तत् ॥ ७ ॥ कालान्तरे तथैवोक्तः, कृपया साधुपुङ्गवैः । तेने भक्तजातीय—मेवोत्तरमसौ पुनः ॥८॥ एवमालम्बनैः सत्या—ऽसत्यैः साधून् मतारयन् । वराको दूरभव्योऽपि, न धर्मं प्रतिपद्यते ॥ ९ ॥ मायो नरकतिर्यक्षु, जातु मर्त्याऽमरेष्वपि । पदे पदेऽथ दुःखार्त्तो, भ्रान्त्वाऽनन्तमनेहसम् ॥ ११० ॥ यथाप्रवृत्तकरणा—द्विवरं प्राप्य कर्मणः । सम्यग्गुरूपदेशेन, स धर्मं प्रतिपत्स्यते ॥११॥ (युग्मम्) । सम्यगाराधयन् धर्मं, भवैः कतिपयैस्ततः । निर्दह्याऽशेषकर्माणि, स सिद्धिसुखमाप्स्यति ॥ १२ ॥ भव्यश्चोवाच तत्रैवं, करिष्ये मुक्तिकाम्यया । युष्माभिरुदितं धर्मं, परं सप्ताऽब्दवत्सरैः ॥ १३ ॥ यत्साधानाऽधुना पत्नी, बालश्चापाठितः सुतः । सुता नोद्वाहिताऽद्यापि, तद् द्राग् मोक्तुं न शक्यते ॥ १४ ॥ विभाव्य योग्यतां वर्षैः, सप्तभिरथ साधुभिः । तपस्यामार्हतीं भद्र !, भजस्वेत्युदितः पुनः ॥ १५ ॥ प्रतिपद्यार्हतं धर्मं, स संवेगतरङ्गितः । सप्तभिः सुभवैः . कर्म—निर्मुक्तः शिवमाप्स्यति ॥ १६ ॥ श्रुत्वा साधुवचश्चाख्य—देवमासन्नसिद्धिकः । रोचते भवदुक्तं मे भृशं पीयूषपानवत् ॥ १७ ॥ परं नियन्त्रितो जाया—पत्यादिप्रेमबन्धनैः । मुमुक्षुरपि गार्हस्थ्यं, सहसा मोक्तुमक्षमः ॥ १८ ॥ तद्वियोज्य प्रियाऽपत्य—प्रतिबन्धं शनैः शनैः । करिष्यामि भवद्वाक्यं, परमागामिवत्सरे ॥ १९ ॥ आगामिवत्सरे जात—श्रद्धः

मिथ्यादर्शनमेवास्तु, किमन्यैर्दर्शनान्तरैः । निर्वृतिर्लभ्यते यस्मिन्, सरागेणापि चेतसा ॥ ५५ ॥ कल्पितान्यपराणीह, दर्शनानि तु शाम्भिकैः । मुग्धप्रतारणार्थेन, मिथ्याशास्त्रोक्तियुक्तिभिः ॥५६॥ ततो विषयसामग्री, यावदस्तीयमत्र वः । तावद्विलसते स्वैरं, निःशङ्कमनसोऽधुना ॥५७॥ पापमिदमितुच्यास्तु, भोगान् मा मुञ्चताऽऽगतान् । इत्थमुन्मार्गमन्येभ्यः, कुधीः सोपादिशत् पुनः ॥५८॥ (युग्मम्) प्रसूतः प्रीतिमत्याऽथ, पुनः प्रवरलक्षणः । श्रेष्ठी हृष्टस्ततोऽकार्षी–द्वर्धापनमहोत्सवम् ॥५९॥ देवदिन्न इति न्यस्त–नामा पित्रादिभिश्च सः । लाल्यमानः सदा पञ्च–धात्रीभिर्वर्द्धते सुखम् ॥ १६० ॥ भाग्यसौभाग्यनिलयः, समयेऽध्ययनाय सः । …कोऽस्य पित्रा सद्‌ने, कलाचार्यद्विजन्मनः ॥ ६१ ॥ उद्युक्तः शिक्षते सोऽपि, क्रमाद् द्वासप्तर्ति कलाः । अथास्ते सुन्दरो …नस्य ऋद्धिमान् ॥ ६२ ॥ रूपेणाऽतिरतिस्तस्य, दुहिता बालखण्डिता । आस्ते सरस्वती नाम्ना, …दनम् ॥ ६३ ॥ कलाचार्यस्य तस्यैव, समीपे स्त्रीजनोचिताः । अधीते च चतुःषष्टिं, कलाः साऽपि सदोद्यता …नालकोपभृशोद्‌दोषः, कस्मिंश्चिद् दुर्नयेऽन्यदा । उपाध्यायीमुपाध्यायः, स ताडयति निर्दयम् ॥ ६५ ॥ दयार्द्रमनसो …पा लेखशालिकाः । सर्वे न्यवारयन्नेतं, द्राक् प्रविश्याऽन्तरे तदा ॥ ६६ ॥ परं सरस्वती स्थाना–न्नोदस्थादप्यवज्ञया । …भाषी–त्तां रहो हृदि विस्मितः ॥ ६७ ॥ उपाध्यायी प्रियेणैवं, ताड्यमाना शुभेऽधुना । किं त्वयोपेक्षितेतीप–…ाऽन्यदह ॥ ६८ ॥ प्रयोजनं किमेतस्याः, कुलार्या मम चिन्तया । इयं कथं कुलारीति, तेन पृष्टा पुनर्जगौ …कुनारी सैव या पत्या, स्वदासेनेव कारयेत् । गृहकृत्यानि कुर्याच्च, तस्य साहाय्यमापदि ॥ १७० ॥ तथा कर्तुमशक्तेयं, …प्रा नलेन् । कुनारी दुहिता सैषा, तत्कुलीन स्वलक्षणैः ॥ ७१ ॥ तस्याः सर्वनराऽवज्ञा, गर्जन्मृदुच्छृङ्खलं वचः ।

देवदिन्नो निशम्येत्थं, समन्युर्हृदि दध्यिवान् ॥ ७२ ॥ परिणीय मयावश्यं, सर्वस्वजनसाक्षिकम् । मोक्तव्या द्राग् न दृष्टाऽपि,
दृष्टव्या शल्यवत्तदा ॥ ७३ ॥ यद्येषानुभवत्यात्म–गर्वाग्रफलमात्मना । साप्यजानात्तदाकूतं, दक्षा तादृशभिङ्गितैः ॥ ७४ ॥
ततोऽधीत्याल्पकालेन, स्वोचिताः सकलाः कलाः । देवदिन्नसरस्वत्यौ, प्रापतुः स्वस्वसद्मनि ॥ ७५ ॥ महेभ्या बहवोऽथेयुः, प्रिय-
दगुश्रेष्ठिसद्मनि । देवदिन्नकुमाराय, दातुं निजनिजां कनीम् ॥ ७६ ॥ परं सुन्दरसार्थेश–सुतामेव सरस्वतीम् । परिणेष्यामि न त्वन्यां,
कन्यामिति वक्ति सः ॥ ७७ ॥ स एवैकः सुतस्तस्य, श्रेष्ठिनश्चातिवल्लभः । तदिष्टे नान्यथा कर्तु–मेतद्वाक्यं पिताऽपि सः ॥ ७८ ॥
मतोऽनमत्य सर्वेभ्यान्, कन्यां दातुं गृहाऽऽगतान् । श्रेष्ठी सुन्दरसार्थेशं, द्विजास्येनेत्यमब्रवीत् ॥ ७९ ॥ सरस्वती द्विधाऽ-
प्याख्ये, सार्थेश ! तव या कनी । देहि तां दिव्यरूपाय, मदीयतनुजन्मने ॥ १८० ॥ देवदिन्नसरस्वत्यो–र्यत्तुल्यकुलशीलयोः ।
स्वर्णमण्योरिव श्रेष्ठिन् !, सम्बन्धः प्रतिभाति नः ॥ ८१ ॥ पुराप्यास्ते समानर्द्धि–शीलयोः प्रीतिरावयोः । तां चेच्छामि
दृढीकर्तु, सम्बन्धेनामुनाऽधुना ॥ ८२ ॥ सरलप्रकृतिः सार्थ–पतिः सोऽपि तदा सुताम् । तामाकार्योपवेश्याऽथो–त्सङ्गे
सस्नेहमित्यवग् ॥ ८३ ॥ प्रियदगुश्रेष्ठिना वत्से !, प्रहितोऽयं द्विजोत्तमः । देवदिन्नकुमारार्थं, भवतीं याचतेऽधुना ॥ ८४ ॥
अथ तं देवदिन्नस्य, दृष्टाऽऽकूतं विदत्यपि । कौशल्यात् स्वोक्तिनिर्वाह–चिकीस्तातमुवाच सा ॥ ८५ ॥ यदि दास्यसि मां
तात !, त्वमन्यस्यापि कस्यचित् । कुलशीलवयोविद्या–दिभिस्तद्वुचितो ह्यसौ ॥ ८६ ॥ ततः सार्थपतिः प्रीतः, सर्वं तेन
द्विजन्मना । प्रियदगुश्रेष्ठिसम्मत्य, देवदिन्नाय तां ददौ ॥ ८७ ॥ विवाहः शुभलग्नेऽथ, महेन महता तयोः । मिथः सन्मानसत्कार–
गर्भः समपद्यत ॥ ८८ ॥ दुष्टहृद् देवदिन्नोऽथ, परिणीय सरस्वतीम् । तदैव तत्पितुर्गेहे, विमुच्यागात् स्वसद्मनि ॥ ८९ ॥

सदा साधु–धर्मानुष्ठानमाचरन् । कृत्स्नकर्मक्षयादाप, मुक्तिं तद्भवसिद्धिकः ॥ ३८ ॥ प्रायो नरकतिर्यक्षु, सञ्चरन् पापकर्मभिः । अज्ञानकष्टक्रियया, जातु स्वर्गिनरेष्वपि ॥ ३९ ॥ भाग्यहीन इव स्वर्ण–निधिं नाऽभव्यचेतनः । अनन्तेनाऽपि कालेन, लप्स्यते पदमव्ययम् ॥ १४० ॥ (युग्मम्) अनन्तेनाथ कालेन, दूरभव्यश्च सेत्स्यति । सप्ताऽष्टैश्च भवैर्भव्य–स्त्रिभिश्चासन्नसिद्धिकः ॥ ४१ ॥ तस्मिन्नेव भवे चाप्तः, सिद्धिं तद्भवसिद्धिकः । तारतम्येन मोहस्य, भिदाऽमीषामपीत्यभूत् ॥४२॥ यावान् यस्य भवेन्मोह–स्तावती तस्य संसृतिः । तन्मोहचयाऽपचया–त्तुगा संसृतिरङ्गिनाम् ॥ ४३ ॥ तद्दुःखाऽसुखसन्दोहः, प्ररोहः पापकर्मणः । आत्मब्रह्मकृतद्रोह––स्त्याज्यो मोहः शिवार्थिभिः ॥ ४४ ॥ यद् भ्रान्ता भ्रमिष्यन्ति, भ्रमन्ति च भवेऽङ्गिनः। मोहस्यैवाखिलो नूनं, महिमाऽयं महत्तमः ॥ ४५ ॥ साग्रं पैशून्यमुन्मार्ग–देशनाऽलीकवादिता । अत्यन्तविषयासक्ति–र्मिथ्यात्वैकान्तनिष्ठता ॥ ४६ ॥ अवज्ञाऽऽर्हतधर्मस्यो––पहासश्च सुसाधुषु । महामोहस्य चेमानि, लिङ्गान्याहुर्मनस्विनः ॥ ४७ ॥ (युग्मम्) मर्त्त्यजन्मादिसामग्री–मवाप्यापि यथाचिरम् । मियङ्गुर्भवकान्तारे, भ्रान्तो मोहानुभावतः ॥ ४८ ॥ यथा मोहपरित्यागात्, समियोऽपि तदङ्गजः । उत्तीर्णश्च भवाऽरण्यं, तथा वत्सा ! निशम्यताम् ॥ ४९ ॥ (युग्मम्) तथाहि पोतनपुरे, पुरे परमऋद्धिमान् । श्रेष्ठी मियङ्गुनामाऽभू––न्मिथ्यात्वैकान्तनिष्ठधीः ॥ १५० ॥ अर्हद्धर्मक्रियाशुद्ध–साधुश्रद्धोपहासकृत् । नित्यं कूटक्रियाऽलीक––परद्रव्यापहारदक् ॥ ५१ ॥ (युग्मम्) समं प्रीतिमतीनाम्न्या, प्रियया रूपरम्भया । स भुङ्क्ते विषयान् स्वैरं, कामतीव्राऽभिलाषवान् ॥ ५२ ॥ श्रेष्ठिन् ! किं मन्यसे पद्गुषु, दर्शनेष्विति केनचित् । भणितः कौतुकेनाख्य–त्तस्मैवं स मूढधीः ॥ ५३ ॥ मन्येऽहं शोभनं प्राण–प्रियाया एव दर्शनम् । अवाप्नोति सरागोऽपि, पुरुषो यत्र निर्वृतिम् ॥ ५४ ॥ यदुक्तम्–

साधूपदेशतः । सद्यः मपद्यते जैनीं, दीक्षामासन्नसिद्धिकः ॥ १२० ॥ सम्यगाराध्य तां स्वर्गी, भविता स चिरं सुखी तदर्थकावतारेण, नृप मुक्तिमवाप्स्यति ॥ २१ ॥ साधुवाक्यमथाकर्ण्य, पुण्यमाहात्म्यगर्भितम् । कृताञ्जलिरुवाचैवं, हृष्टस्तद्भवसिद्धिकः ॥ २२ ॥ अनादिकालतो मोह–निद्रया नष्टचेतनः । अहं प्रबोधितः साधु, युष्माभिः साधुपुङ्गवैः ॥ २३ ॥ धन्यानामपि धन्योऽहं, सम्यग्मार्गोपदेशकाः । यद्यूयं मिलिताः सम्प–त्युत्पथे गच्छतो मम ॥ २४ ॥ मज्जताऽत्र मयाऽपार–संसारमकराकरे । निर्यामकनिभा यूय–माप्ताः सद्धर्मनौयुताः ॥ २५ ॥ स्नेहपाशैर्निबध्याशु, पञ्चेन्द्रियमलिम्लुचैः । क्षुत्पिपासादिदुःखार्त्तो, निक्षिप्तो भवचारके ॥ २६ ॥ हन्यमानोऽन्वहं जन्म–मृत्याधिव्याधितर्जनैः । न त्राणमाप्नुवं किञ्चि–देतावन्तमनेहसम् ॥ २७ ॥ ( युग्मम् ) शुभदैवाऽनुभावेना–धुना त्वावद्धमोचकाः । आसादिता मया यूय–मत्राणत्राणकारिणः ॥ २८ ॥ सुलभा एव संसारे मर्त्याऽमरमहर्द्धयः । संयोगः सद्गुरूणां तु, जन्तूनामतिदुर्लभः ॥ २९ ॥ बहुशोऽपि मया लौल्यात्, षडप्यासादिता रसाः । सद्गुरूक्तिसुधा जन्तु–जन्ममृत्युंहरा न तु ॥१३०॥ विद्वानपि न जानाति, सम्यक् तत्त्वं गुरून् विना । यथा दीपं विना ध्वान्ते, न पश्यत्यपि शुद्धदृक् ॥ ३१ ॥ संसाराऽसारसौख्यायो–पक्रमन्ते यथाऽङ्गिनः । तथा जैनक्रियायै चेत्, करान्तर्निर्वृतिस्तदा ॥ ३२ ॥ नानादुःखौघसंयुक्त–सांसारिकसुखादहम् । निवृत्तो विषसम्पृक्त–परमान्नादिवाधुना ॥ ३३ ॥ वाणिज्यं स्वार्जनेनैव, जिनधर्मेण वर्जितः । इयान् दिनव्ययो वाढं, वैफल्येन दुनोति माम् ॥ ३४ ॥ भवाम्भोधितरी पाप–हरी जन्तुशिवङ्करी । दीयतामार्हती दीक्षा, क्षिप्रं मे मुनिपुङ्गवाः ! ॥ ३५ ॥ सान्तरायो यतो धर्मः, प्रायो बहुलकर्मणाम् । अत एवाऽकथि प्राज्ञै–र्धर्मस्य त्वरिता गतिः ॥ ३६ ॥ इत्थमुत्सर्पिसंवेगः, प्राव्राजीन्मुनिसन्निधौ । संसारवासमुत्सृज्य, श्लेष्माणमिव च द्रुतम् ॥ ३७ ॥ अप्रमत्तः

सदा साधु-धर्मानुष्ठानमाचरन् । कृत्स्नकर्मक्षयादाप, मुक्तिं तत्त्वसिद्धिकः ॥ ३८ ॥ मायो नरकतिर्यक्षु, सञ्चरन्
पापकर्मभिः । अज्ञानकष्टक्रियया, जातु स्वर्गिनरेष्वपि ॥ ३९ ॥ भाग्यहीन इव स्वर्ण-निधिं नाऽभव्यश्चेतनः ।
अनन्तेनाऽपि कालेन, लप्स्यते पदमव्ययम् ॥ १४० ॥ ( युग्मम् ) अनन्तेनाथ कालेन, दूरभव्यश्च सेत्स्यति । समाऽष्टैश्च भवैर्भव्य-
स्त्रिभिश्चासन्नसिद्धिकः ॥ ४१ ॥ तस्मिन्नेव भवे चासः, सिद्धिं तत्त्वासिद्धिकः । तारतम्येन मोहस्य, भिदाऽमीषामपीत्यभूत् ॥४२॥
यावान् यस्य भवेन्मोह-स्तावती तस्य संसृतिः । तन्मोहक्षयाऽपचया-न्नृणां संसृतिरङ्गिनाम् ॥ ४३ ॥ तद्दुःखाऽसुखसन्दोहः,
मरोहः पापकर्मणः । आत्मब्रह्मकृतद्रोह--स्त्याज्यो मोहः शिवार्थिभिः ॥ ४४ ॥ यत्र भ्रान्तरा भ्रमिष्यन्ति, भ्रमन्ति च भवेऽङ्गिनः॥
मोहस्यैवाखिलो नूनं, महिमाऽयं महत्तमः ॥ ४५ ॥ साम्यं पैशून्यमुन्मार्ग-देशनाऽलीककथादिता । अत्यन्तविषयासक्ति-
र्मिथ्यात्वैकान्तनिष्ठता ॥ ४६ ॥ अवज्ञाऽर्हतधर्मस्यो--पहासश्च सुसाधुषु । महामोहस्य चेमानि, लिङ्गान्याहुर्मनस्विनः ॥ ४७ ॥
( युग्मम् ) मर्त्यजन्मादिसामग्री-मवाप्यापि यथाचिरम् । मिथद्गुभवकान्तारे, भ्रान्तो मोहानुभावतः ॥ ४८ ॥ यथा
मोहपरित्यागात्, सविघोऽपि तदङ्गजः । उत्तीर्णश्च भवाऽरण्यं, तथा वत्सा ! निशम्यताम् ॥ ४९ ॥ ( युग्मम् ) तथाहि पोतनपुरे,
पुरे परमऋद्धिमान् । श्रेष्ठी मिथद्गुनामाऽभू--न्मिथ्यात्वैकान्तनिष्ठधीः ॥ १५० ॥ अर्हद्धर्मक्रियाशुद्ध-साधुश्रद्धोपहासकृत् ।
नित्यं कूटक्रियाऽलीक--परद्रव्यापहारदृक् ॥ ५१ ॥ ( युग्मम् ) समं प्रीतिमतीनाम्न्या, प्रियया रूपरम्भया । भुङ्क्ते विषयान्
स्वैरं, कामतीव्राऽभिलाषवान् ॥ ५२ ॥ श्रेष्ठिन् ! किं मन्यसे परत्र, दर्शनेष्विति केनचित् । भाणितः कौतुकेनाख्य-द्दसमेनो स
मूढधीः ॥ ५३ ॥ मन्येऽहं शोभनं प्राण-प्रियाया एव दर्शनम् । अवाप्नोति सरागोऽपि, पुरुषो यत्र निर्वृतिम् ॥ ५४ ॥ यदुक्तम्-
१ * *

प्रियादर्शनमेवास्तु, किमन्यैर्दर्शनाऽन्तरैः । निर्वृतिर्लभ्यते यस्मिन्, सरागेणापि चेतसा ॥ ५५ ॥ कल्पितान्यपराणीह, दर्शनानि तु दाम्भिकैः । मुग्धप्रतारणायैव, मिथ्याशास्त्रोक्तियुक्तिभिः ॥५६॥ ततो विषयसामग्री, यावदस्तीयमत्र वः । तावद्विलसते स्वैरं, निःशङ्क-मनसोऽधुना ॥५७॥ पाखण्डिविप्रलब्धास्तु, भोगान् मा मुञ्चताऽऽगतान् । इत्थमुन्मार्गमन्येभ्यः, कुधीः सोपादिशत् पुनः ॥५८ ॥ ( युग्मम् ) प्रसूतः प्रीतिमत्याऽथ, पुत्रः प्रवरलक्षणः । श्रेष्ठी हृष्टस्ततोऽकार्षी-द्वर्द्धापनमहोत्सवम् ॥५९॥ देवदिन्न इति न्यस्त-नामा पित्रादिभिश्च सः । लाल्यमानः सदा पञ्च-धात्रीभिर्वर्द्धते सुखम् ॥ १६० ॥ भाग्यसौभाग्यनिलयः, समयेऽध्ययनाय सः । मुक्तोऽथ पित्रा सदने, कलाचार्यद्विजन्मनः ॥ ६१ ॥ उद्युक्तः शिक्षते सोऽपि, क्रमाद् द्वासप्तति कलाः । अथास्ते सुन्दरो नाम, सार्थेशस्तत्र ऋद्धिमान् ॥ ६२ ॥ रूपेणाऽतिरतिस्तस्य, दुहिता वालखण्डिता । आस्ते सरस्वती नाम्ना, वनितामौलिमण्डनम् ॥ ६३ ॥ कलाचार्यस्य तस्यैव, समीपे स्त्रीजनोचिताः । अधीते च चतुःषष्टिं, कलाः साऽपि सदोद्यता ॥ ६४ ॥ जातक्रोधप्रशोद्बोधः, कस्मिंश्चिद् दुर्नयेऽन्यदा । उपाध्यायीमुपाध्यायः, ताडयति निर्दयम् ॥ ६५ ॥ दयार्द्रमनसो देव-दिन्नाद्या लेखशालिकाः । सर्वे न्यवारयन्नेतं, द्राक् प्रविश्याऽन्तरे तदा ॥ ६६ ॥ परं सरस्वती स्थाना-न्नोदस्थादप्यवज्ञया । देवदिन्नस्ततोऽभाषी-त्तां रहो हृदि विस्मितः ॥ ६७ ॥ उपाध्यायी प्रियेणैवं, ताड्यमाना शुभेऽधुना । किं त्वयोपेक्षितेतीप-न्मुखमाप्रोत्य साऽप्यवक् ॥ ६८ ॥ प्रयोजनं किमेतस्याः, कुनार्या मम चिन्तया । इयं कथं कुनारीति, तेन पृष्टा पुनर्जगौ ॥ ६९ ॥ सुनारी सैव या पत्या, स्वदासेनेव कारयेत् । गृहकृत्यानि कुर्याच्च, तस्य साहाय्यमापदि ॥ १७० ॥ तथा कर्तुमशक्तेयं, न पत्युश्चाज्ञया चलेत् । कुनारी कुट्टिता सैषा, तच्छुनीव स्वलक्षणैः ॥ ७१ ॥ तस्याः सर्वनराऽवज्ञा, गर्जमुदुच्छृङ्खलं वचः ।

देवदिन्नो निशम्येत्थं, समन्युर्हृदि दध्यिवान् ॥ ७२ ॥ परिणीय मयावश्यं, सर्व्वस्वजनसाक्षिकम् । मोक्तव्या द्राग् न दृष्टयाऽपि, द्रष्टव्या सकृदप्यसौ ॥ ७३ ॥ यदेषानुभवत्यात्म-गर्ववाक्फलमात्मना । साप्यजानात्तदाकूतं, दक्षा तादृशमिङ्गितैः ॥ ७४ ॥ ततोऽधीत्याल्पकालेन, स्वोचिताः सकलाः कलाः । देवदिन्नसरस्वत्यौ, आपतुः स्वस्वसद्मनि ॥ ७५ ॥ महेभ्या बहवोऽथेयुः, प्रियङ्गुश्रेष्ठिसद्मनि । देवदिन्नकुमाराय, दातुं निजनिजां कनीम् ॥ ७६ ॥ परं सुन्दरसार्थेश-सुतामेव सरस्वतीम् । परिणेष्यामि न त्वन्यां, वधूमिति वक्ति सः ॥ ७७ ॥ स एवैकः सुतस्तस्य, श्रेष्ठिनश्चातिवल्लभः । तन्निष्टे नान्यथा कर्तुं-मेतद्वाक्यं पिताऽपि सः ॥ ७८ ॥ अतोऽवमत्य सर्वेभ्यान्, कन्यां दातुं गृहाऽऽगतान् । श्रेष्ठी सुन्दरसार्थेशं, द्विजास्येनेत्यमब्रवीत् ॥ ७९ ॥ सरस्वती द्विधाऽप्यास्ते, सार्थेश ! तव या कनी । देहि तां दिव्यरूपाय, मदीयतनुजन्मने ॥ १८० ॥ देवदिन्नसरस्वत्यो-र्यत्तुल्यकुलशीलयोः । स्वर्णमण्योरिव श्रेष्ठिन् !, सम्बन्धः प्रतिभाति नः ॥ ८१ ॥ पुराप्यास्ते समानर्द्धि-शीलयोः प्रीतिरावयोः । तां चेच्छामि दृढीकर्तुं, सम्बन्धेनामुनाऽधुना ॥ ८२ ॥ सरलप्रकृतिः सार्थ-पतिः सोऽपि तदा सुताम् । तामाकार्योपवेश्याऽथो-त्सङ्गे सस्नेहमित्यवक् ॥ ८३ ॥ प्रियङ्गुश्रेष्ठिना वत्से !, प्रहितोऽयं द्विजोत्तमः । देवदिन्नकुमारार्थं, भवतीं याचतेऽधुना ॥ ८४ ॥ अथ तं देवदिन्नस्य, दुष्टाऽऽकूतं विदत्यपि । कौशल्यात् स्वोक्तिनिर्वाह-चिकीर्स्तातमुवाच ता ॥ ८५ ॥ यदि दास्यसि मां तात !, त्वमन्यस्यापि कस्यचित् । कुलशीलवयोविद्या-दिभिस्त्वनुचितो ह्यसौ ॥ ८६ ॥ ततः सार्थपतिः प्रीतः, समं तेन द्विजन्मना । प्रियङ्गुश्रेष्ठिसन्नत्य, देवादिन्नाय तां ददौ ॥ ८७ ॥ विवाहः शुभलग्नेऽथ, महेन महता तयोः । मिथः सन्मानसत्कार-सरसः समपद्यत ॥ ८८ ॥ दुष्टहृद् देवदिन्नोऽथ, परिणीय सरस्वतीम् । तदैव तत्पितुर्गेहे, विमुच्यागात् स्वसद्मनि ॥ ८९ ॥

स मित्रस्वजनैर्लोक-विरुद्धत्वादियुक्तिभिः । बहुशो भण्यमानोऽपि, नानैषीत्तां पितुर्गृहात् ॥ १९० ॥ आनिनीषुरपि श्रेष्ठी, किञ्चित् किञ्चिन्मिषेण ताम् । नाऽनैषीत् पुत्रदोदूया-दूनीतो जातु स्वमन्दिरम् ॥ ९१ ॥ पालयन्त्यमलं शीलं, मनोवचनकर्मभिः । निर्विषादा पितुर्गेहे, तिष्ठति स्म सरस्वती ॥ ९२ ॥ पितुः प्रसादान्निश्चिन्तो, देवदिन्नः सुहृत्सखः । नानाक्रीडाभिराक्रीडादिषु क्रीडति सर्वदा ॥ ९३ ॥ अथ द्विजसुहृद्गोष्ठी-व्याक्षिप्तमनसोऽन्यदा । लीलया देवदिन्नस्य, राजवर्त्मनि गच्छतः ॥ ९४ ॥ अनाभोगवशात् स्कन्धो, गाढं लग्नः पणस्त्रियः । नाम्ना कामपताकाया, आयन्त्याः पथि सम्मुखम् ॥ ९५ ॥ ( युग्मम् ) प्रसादपात्रं भूपस्य, साऽपि दूनमना भृशम् । देवदिन्नं करे धृत्वा, तदा सासूयमित्यवक् ॥ ९६ ॥ यौवने स्वार्जितामेव, त्याग-भोगादिभिः श्रियम् । भुञ्जानस्य नरस्येत्थं, गर्वोऽपि प्रशस्यते ॥ ९७ ॥ भुञ्जानः स्वपितुर्लक्ष्मीं, मिथ्या-हङ्कारभाग्भवान् । स्कन्धेनाऽऽघ्नन् जनान् श्रेष्ठि-कुमारस्खलतीति किम् ? ॥९८॥ षोडशाब्दवया भुङ्क्ते, यः पुत्रो जनकश्रियम् । स प्राच्यऋणसम्बन्धे-नापातस्तस्य निश्चितम् ॥ ९९ ॥ यतः-मातुः स्तन्यं रजःक्रीडा, मन्मनावागलज्जता । शैशवे भान्ति निर्हेतु-हास्यं भोगः पितुः श्रियः ॥ २०० ॥ किञ्च-स्वसा पित्रार्जिता लक्ष्मीः, परस्त्री च परार्जिता । स्वार्जितैव ततो भोक्तुं, युज्यते महतां ध्रुवम् ॥ १ ॥ अधिक्षेपवचस्तस्याः, स्वव्रीडाकरमप्यदः । गुरुशिक्षामिवामंस्त, देवदिन्नो हितावहम् ॥ २ ॥ दध्यौ च हृदि हृष्टात्मा, सुष्ठु ज्ञापितमेतया । क्रीडया मे मुधाऽगच्छ-द्वयो वित्ताऽर्जनोचितम् ॥ ३ ॥ यदुक्तम्- प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम् । तृतीये नार्जितो धर्मः, स तुर्ये किं करिष्यति ! ॥ ४ ॥ ततः सद्मनेत्याशु, विनयाऽवनमच्छिराः । देवदिन्नः शुभोत्साहः, पितरं प्राह सादरम् ॥ ५ ॥ अनुमन्यस्व मां तात !, यास्याम्यर्जयितुं श्रियम् । भृत्वा क्रयाणकैः पोतं, परद्वीपपयोनिधौ ॥ ६ ॥

श्रेष्ठी लोभाभिभूतोऽपि, पुत्रस्नेहात्तदाऽवदत् । विदेशा विषमा वत्स !, तत्राऽब्धिस्तु विशेषतः ॥ ७ ॥ त्वमेवैकसुतो वत्स !,
कुलस्यालम्बनं मम । प्राणसन्देहकारिण्या, ततस्तं वार्द्धियात्रया ॥ ८ ॥ देवदिन्नोऽप्यवक् तातो–धर्मेनैवाप्यते रमा ।
अलसाव्यवसायिभ्यः, सा तु दूरं पलायते ॥ ९ ॥ यदुक्तम्–अव्यवसायिनमलसं, दैवपरं पुरुषकारपरिहीणम् । प्रमदा इव वृद्धपतिं,
नेच्छन्त्यवगूहितुं लक्ष्मीः ॥ २१० ॥ श्रियः सर्वत्र दृश्यन्ते, कष्टेनाऽन्तरिता नृणाम् । वेधव्यया सहित्वैव, कर्णः कुण्डलभाग् भवेत्
॥ ११ ॥ अर्थार्जनार्थमत्यर्थ–मित्युत्कण्ठितचेतसम् । अथ श्रेष्ठी सुतोत्साह–हृष्टस्तमनुमन्यत ॥ १२ ॥ ततश्चतुर्विधैः पण्यैः,
पोतमापूर्य भूरिभिः । विधाय सर्वसामग्रीं, तदर्हामपरामपि ॥ १३ ॥ आविश्वासः श्रियो मूल–मस्यार्थं मनसि स्मरन् । मा स्म यातः
परद्वीपे, कस्यचिद् वत्स ! विश्वसीः ॥ १४ ॥ प्रमोदेन समर्पितां, पितृशिक्षाहिताशिषम् । आराध्य बलिपूजाद्यै–रब्धेश्चाधिदैवतम्
॥ १५ ॥ दीनादिभ्यो ददद्दानं, कृतदेवनमस्कृतिः । सुलग्ने पोतमारुह्य, स सुधीः सपरिच्छदः ॥ १६ ॥ ( चतुर्भिः कलापकम् )
अथ पारसकूलस्य, संमुखं श्रेष्ठिनन्दनः । सोत्साहः सत्वरं पोत–वाहैः पोतमचीचलत् ॥ १७ ॥ दुर्दैवात्तैः परं पोतः, प्रेर्यमाणोऽपि
सत्पथे । उत्पथे याति दुर्वात–मशुभः शकुलाऽभवत् ॥ १८ ॥ अत्रैव भङ्क्ष्यते नूनं, स्खलित्वा क्वाचिदश्मनि । अथैवं देवदिन्नादौ,
पोतलोके विषीदति ॥ १९ ॥ भवितव्यनियोगेन, क्वचिदज्ञातनामके । मन्दिरे धवलात्तुङ्ग–मन्दिरेऽगात्क्रमेण सः ॥ २२० ॥
मन्यमाना मुदात्मान–मायातं नव्यजन्मनि । देवदिन्नादयः सर्वे, वाहनादुदतारिषुः ॥ २१ ॥ तत्रत्यं कञ्चिदप्राक्षीद्,
देवदिन्नोऽथ मानवम् । किमिदं मन्दिरं कोऽत्र, राजा के च महत्तराः ॥ २२ ॥ सोऽप्याह मन्दिरं खेत–दन्यायपुरपत्तनम् ।
प्रचण्डशासनः श्रेष्ठिन् !, निर्विचारोऽत्र भूपतिः ॥ २३ ॥ सुधीः सर्वज्ञिको मन्त्री, शिलापातः पुरोहितः । आस्ते

श्रीकरणाध्यक्षो-ऽनाचारस्तस्य भूभुजः ॥ २४ ॥ विश्रुतः सर्वलुण्टाक-स्तलारक्षोऽत्र सर्वतः । तपस्वी पुनरज्ञान-राशिः प्राधान्यमाश्रितः ॥ २५ ॥ राज्ञः प्रसादसदनं, मान्या पूरमहत्तरैः । आस्ते परिव्राजिकैका, कुबुध्यभिधा पुनः ॥ २६ ॥ नृणां सङ्कटे प्राप्ते, विषमेऽस्य महीभुजः । निधिः कपटबुद्धीनां, सा ददाति धियं तु ताम् ॥ २७ ॥ यस्या बलेन भूजानि-र्निखिलानपि तानरीन् । निर्जित्य तेषां निःशेषा-मात्मसात्कुरुते श्रियम् ॥ २८ ॥ इति ज्ञाताखिलव्यक्ति-र्देवदिन्नोऽथ तन्मुखात् । स मौढग्रामतो गत्वा, प्रणनाम महीभुजम् ॥ २९ ॥ राज्ञा भदत्तसन्मानः, कृतसभ्योचितक्रियः । तत्रासीनः स तद्राज्य-व्यवस्थां यावदीक्षते ॥ २३० ॥ विमुक्तकेशा जरती, निर्दयं ताडयन्त्युरः । उच्चैः पूत्कुर्वती काचि-त्तावत्तत्र समागमत् ॥ ३१ ॥ का त्वं किं पूत्करोष्यम्ब !, राज्ञेत्युक्ताऽवदच्च सा । नाथाहं चौरजननी, वसामि भवतः पुरे ॥ ३२ ॥ परं शुभाऽशुभां तस्मिं, जातु कुर्वे न कस्यचित् । फलहा येन केनापि, यामि कस्यापि नो गृहे ॥ ३३ ॥ अस्या वाग्विपयातीतं, सुशीलत्वमहो इति । विस्मितोऽन्तर्नृपोऽवोच-त्ततः किमिति साऽप्यवक् ॥ ३४ ॥ एक एवाङ्गजन्माऽभू-दन्ययष्टिसमो मम । गृहनिर्वाहमातन्वन्, स्तैन्येनात्र पुरेऽनिशम् ॥ ३५ ॥ खात्रं खनन्नभूत्सोऽद्य, देवदत्तेभ्यसद्मनि । अकस्मान्न्यपतत्तस्यो,-परि भित्तिश्च जर्जरा ॥ ३६ ॥ स तेनैव मृतस्तेन, विनाथ भविता कथम् । ममाधारविहीनाया, योगक्षेमविधिर्हहा ! ॥ ३७ ॥ इति दुःखातिरेकेण, दूनात्मा पूत्करोम्यहम् । ततो विषादं मा कार्षी-रिति मातर्मृते सुते ॥ ३८ ॥ यत्ते तृप्तिं करिष्यामि, सर्वां भरणपोषणैः । इत्थं सन्तोष्य जरतीं, सदयं व्यसृजन्नृपः ॥ ३९ ॥ देवदत्तेभ्यमाकार्य, सकोपमथ सोऽवदत् । जर्जराऽमीदृशीं भित्तिं-दूरात्मन् ! किमचीकरः ? ॥ २४० ॥ वराकस्तस्करोऽद्यानि, निपतन्त्या मया द्रुतम् । सोऽप्याख्यत्सभयोत्कम्पं, स्वामिन् ! किं मेऽत्र

दूषणम् ॥ ४१ ॥ स्वार्थमास्थाय सामग्री, निखिलाऽप्युपढौकिता । यन्मया सूत्रधारस्य, वृत्तिश्चापि यथार्थितम् ॥ ४२ ॥
ततस्तस्यैव वैगुण्यं, किमप्यत्र विचारय । आहूय सूत्रधारोऽथ, पृष्टः कोपात् स भूभुजा ॥ ४३ ॥ चौरघाताय किं भित्ति-
मकार्षीरिति जर्जराम् । सोऽप्यवोचद् यथासूत्रं, चयनावहितोऽप्यहम् ॥ ४४ ॥ उदारस्फारशृङ्गारां, देवदत्तसुतां पुरः ।
व्रजन्तीं सासितामत्र, वीक्ष्याभिनवयौवनाम् ॥ ४५ ॥ तद्रूपाक्षिप्तचित्तत्वा-च्छून्यो व्यरचं मनाक् । इष्टिकाशिथिलन्यासं,
तन्मे दोषः प्रभोऽत्र कः ॥ ४६ ॥ (त्रिभिर्विशेषकम्) तामप्याकार्य राजाख्याद्, मुग्धे चिन्वत्यभूद् गृहम् । यत्रैकाग्रमनाः
सूत्र-धारस्तत्र किमागमः ? ॥ ४७ ॥ देवदत्तसुताऽप्यूचे, यान्त्यहं सुजनैकासि । वीक्ष्य नग्नं परिव्राज-मूर्ध्वीभूय स्थितं
पथि ॥ ४८ ॥ व्रीडायैवशाद्राज-त्रुत्पथमास्थिता सती । तत्र प्रासवतीं तन्मे, नत्वागो मनागपि ॥ ४९ ॥ परिव्राजकमप्याह,
कोपेनाहूय तं नृपः । किमस्था नग्न निर्लज्ज, त्वमूर्ध्वो राजवर्त्मनि ॥ २५० ॥ सोऽप्याह राजन् ! यदहं, चिरमूर्ध्वन्दमः
स्थितः । अश्वं शिक्षयता तत्र, जामात्रा स्खलितः पथि ॥ ५१ ॥ तत्को ममापराधोऽयं, न्यायवर्त्म विलोकय । स जामाता-
प्याहूय, कोपेनाभाणि भूभुजा ॥ ५२ ॥ पुरान्तः सर्वलोकानां, गमनागमताऽन्वलि । किमरे शिक्षितो वाजी, भवता विविधा
गतीः ॥ ५३ ॥ राजपुत्रोऽप्यवग् राजन् !, न दोषोऽत्र मनाग् मम । किन्त्वीदृग्बुद्धिदो मेऽत्र, विधिरेवापराध्यति ॥ ५४ ॥
भूपश्च मावदत् सभ्यान्, निबध्यानीयतां बलात् । विधिमप्यत्र यन्नाहं, सहे कस्यापि दुर्नयम् ॥ ५५ ॥ धूर्ताः सभासदः
प्राहुः, सापराधतया ध्रुवम् । त्वदण्डचकितो देव, ! पलायिष्ट तदैव सः ॥ ५६ ॥ प्रचण्डशासनात्त्वत्तः, पलाय्यापि परं विधिः ।
शृगालीव रवेर्देव, कियद्दूरं प्रयास्यति ॥ ५७ ॥ यतस्ततोऽसौ तत्पुम्भि-र्निबध्यानायिष्यते । इति तथ्यैरिवाऽतथ्यै-रपि

गूर्त्तचद्र्दितः ॥ ५८ ॥ हादि हृष्टो विसृज्याथ, निर्विचारनृपः सभाम् । आवासन्तर्ययौ भुक्त्यै, स्वं विदन् न्यायतत्परम् ॥ ५९ ॥
( युग्मम् ) एतत्तु निखिलं साक्षा-द्वीक्ष्य न्यायाध्वसौष्ठवम् । देवादिन्नवणिग् वाढं, विस्मितो हादि दाध्य-
वान् ॥ २६० ॥ अदृष्टाऽश्रुतपूर्वस्य निर्विचारमहीभुजः । अहो ! कापि नवीनेयं, राज्यनीतिव्यवस्थितिः ॥ ६१ ॥
पोतादुत्तार्य पण्यानि, भाटकात्तेऽथ वेश्मानि । देवदिन्नः सुखं तस्थौ, क्रयविक्रयनिष्ठधीः ॥ ६२ ॥
अन्येद्युः श्रेष्ठिभूः सोऽथ, परिव्राजिकया तया । सादरं सपरिवारो, भोजनाय निमन्त्रितः ॥ ६३ ॥ भोज्यैः फलालिपक्वान्न-
शालिदालिघृतादिभिः । सा सत्यौचित्यसत्कार-पूर्वं च तमभूभुजत् ॥ ६४ ॥ सरलप्रकृतौ देव-दिन्नेऽथ सपरिच्छदे ।
तत्र भुक्त्यर्थमायाते, कूटबुद्धिर्द्विधाऽपि सा ॥ ६५ ॥ तदुत्तारकगेहान्त-र्गुप्तस्थाने क्वचिद्रहः । निजाप्तपुरुषैः स्वर्ण-स्थालमेकं
न्यनिक्षिपत् ॥ ६६ ॥ ( युग्मम् ) भुक्त्वा स्वस्थानमासाद्य, देवदिन्नाय सा पुनः । पृष्ठतः स्वनरं प्रेष्य तन्मुखेनेत्यचीकथत् ॥ ६७॥
सुवर्णस्थालमस्माक-मेकमद्य गतं क्वचित् । युष्मत्परिजनाच्चान्यो, न कोऽप्यत्राऽऽगतोऽभवत् ॥ ६८ ॥ ततस्तं निखिलं पृष्ट्वा,
सर्वथापि विलोक्य न । क्षिप्रमर्पय तद्वार्ता, यथैषा न पतेद् बहिः ॥ ६९ ॥ देवदिन्नोऽप्यवग् भद्र !, कालभावेन कर्हिचित् ।
पश्चिमायामुदेत्यर्को, मर्यादां चाब्धिरुज्झति ॥ २७० ॥ नास्माकीनः परं कोऽपि, रम्येऽपि परवस्तुनि । करं क्षिपति तद् गत्वा,
स्वौकस्येव तदीक्ष्यताम् ॥ ७१ ॥ ततः सा स्वयमभ्येत्य, देवदिन्नमवक् पुनः । श्रेष्ठिंस्तत्स्थालमायासी-च्चैवोत्तारके क्वचित्
॥ ७२ ॥ तन्मे कुटुम्बाचारेण, मार्गयन्त्यास्तदर्पय । भुक्तवान् यत्र तत्रैव, मा भाङ्क्षीद् भाजनं भयान् ॥ ७३ ॥ अथ चेत्
साम्प्रतमेतत्थं, मार्गितो नार्पयिष्यसि । आदास्ये दण्डयुक्त्यापि, तर्हि राजबलेन तत् ॥ ७४ ॥ ऋजुस्तत्कूटमविदन्,

देवद्विषोऽप्युवाच ताम् । किमित्यमधिकन्यूना–न्याख्यासि मुखरे मुधा ! ॥ ७५ ॥ जातु जात्यसुवर्णेऽपि, श्यामता लगति, क्वचित् । अस्मत्परिजनस्यैतत्, परं कर्म घटेत न ॥ ७६ ॥ भविष्यति ततः स्थालं, त्वत्सद्मन्येव कुत्रचित् । तत्त्र त्वरितं गच्छ, पृच्छ चात्मपरिच्छदम् ॥ ७७ ॥ न शुध्यत्यात्मनो ह्यात्म–पृष्टमेवं विदन् सुधीः । मिथ्यापदोषं सहसा, परेष्वारोपयेत् कथम् ? ॥ ७८ ॥ विवादे वर्द्धमाने चे–त्युक्तिप्रत्युक्तिभिश्चिरम् । ययातौ तन्निवृत्त्यर्थं, तौ महीजानिपर्षदि ॥ ७९ ॥ तद्विवादव्यतिकरं, ज्ञात्वाऽन्योऽन्यं विचार्य च । तयोर्नृपतिसामन्तै–रित्यादिष्टं महत्तरैः ॥ २८० ॥ स्थालं यदन्तर्व्यालोक्य–मानमुद्घटते हि तत् । तदीयं गृहसर्वस्वं, भवेदन्यस्य निश्चितम् ॥ ८१ ॥ सर्वं महत्तरैरेव–दित्योत्तारकृतावानि । तत आगत्य सा स्थालं, नृभिरात्तैर्व्यलोकयत् ॥ ८२ ॥ पूर्वमन्यान्यस्थानेषु, धूर्तत्वेन विलोकयते । पश्चादाकृष्य तज्ज्ञात–स्थानात्तस्याः समर्पितम् ॥ ८४ ॥ नृपाद्यनुमता सद्म–सर्वस्वादानपूर्वकम् । कूटबुद्धिस्तदा देव–दिन्नं दासीचकार सा ॥ ८५ ॥ एवं निपतिते तस्य, नष्टे परिजनोऽखिलः । कूटबुद्धिप्रहाराद् भीतः, पलाय्य द्राग् ययौ क्वचित् ॥ ८६ ॥ पुरापि परदेशीया, बहवो व्यवहारिणः । छलेन हृतसर्वस्वा, एवं दासीकृतास्तया ॥ ८७ ॥ कुर्वाणो नीचकर्माणि, दासीभूतोऽथ तद्गृहे । देवदिन्नोऽतिदुःखार्तो, मनस्येवं व्यभावयत् ॥ ८८ ॥ धनार्जनार्थमाप्तस्य, पीडितैर्मेऽत्र मनोरथैः । कीदृशी दुरवस्थेयं, हा व्यधीयत वेधसा ! ॥ ८९ ॥ अन्यथा चिन्त्यते कार्यं, दैवाद् भवति चान्यथा । वसेत् कर्णे हि भूपार्थो–त्कीर्णे दारिद्रिणां मलः ॥ २९० ॥ दीनस्य प्राणहीनस्य, पराधीनस्य मे हहा ! । आवि जीवितमत्रैव, सर्वस्वमिव यास्यति ॥ ९१ ॥ जातः कृष्णचतुर्दश्याः, स कश्चिदस्ति विष्टपे । यो मोचयति मामस्माद्, दुष्टाद्दास्यकर्मणः ॥ ९२ ॥ तथापि ज्ञापयाम्येत–न्निजवृत्तं यथास्थितम् । पितुः

कथञ्चिदुद्यम्य, लेखप्रेषणतोऽधुना ॥ ९३ ॥ साभिज्ञानं पितुर्लेखं, ततः प्रेषयति स्म सः । स्वदेशं गच्छतो हस्ते, सार्थवाहस्य कस्यचित् ॥ ९४ ॥ ग्रामं तत्र क्रमेणाय, तं मियङ्गुरवाचयत् । ज्ञातस्वपुत्रदौःस्थ्यथा-ऽरोदीच्चारस्वरेण सः ॥ ९५ ॥ देवदिन्नेऽथ पानार्या, प्रस्थिते निजमन्दिरम् । प्रागेव श्रेष्ठिना स्नेहा-दानीताऽऽस्ते सरस्वती ॥ ९६ ॥ दुःखाऽऽपूर्णमित्राऽरुसाद्, विलोक्य श्वशुरं तदा । नवीनं हि किमप्यद्य-त्याशङ्काशङ्कुसङ्कुला ॥ ९७ ॥ तत्र सा सहसाऽऽगत्य, प्रणिपत्य च साऽश्रुदृक् । अभाषीत् किमिदं तात !, दुःखमाकस्मिकं हि वः ॥ ९८ ॥ ( युग्मम् ) निःश्वस्य चावदत्तस्याः, मियङ्गुर्गद्गदं स्वरम् । विदेशे देवदिन्नस्य, दुर्दैवकृतदुर्दशाम् ॥ ९९ ॥ वज्राघातनिभां पत्यु-स्तां श्रुत्वा सा पतिव्रता । दुःखार्त्तहृदयाऽप्येतं, सावष्टम्भमभाषत ॥ २०० ॥ पुत्रदुःखार्तितस्तात !, मा रोदीरिति विस्वरम् । राज्यं किमपि यत्तात !, रुदितेन न लभ्यते ॥ १ ॥ परं प्रसद्य पुंवेषं, समर्प्याऽन्यायपत्तने । स्वज्ञातामपरिवार-परीतां प्रेषयाशु माम् ॥ २ ॥ यथा दुष्टस्त्रियास्तस्या, दुरन्ताद्दास्यकर्मणः । विमोच्य धीबलेनात्र, युष्मत्तनयमानये ॥ ३ ॥ श्रेष्ठ्यप्यवोचद् दुःखार्त्तो, न मुग्धे! वेत्सि यत् पुरा । न कोऽपि कुशलेनाऽऽगा-दन्यायपुरपत्तनात् ॥ ४ ॥ तद्दैवादिति नष्टस्य, कथं पुत्रस्य पृष्ठतः । नाशयामि वधूं धेनो-रिव वत्सतरीं जडः ॥ ५ ॥ सा पुनर्न्यगदत्तात !, मा ध्यासीरिति चेतसि । यद्बिभ्राऽन्तरितो लाभो, भवेद् भाग्यवतामपि ॥ ६ ॥ ततो बुद्धिबलात्पन्तो-स्ताहां निश्चित्य तां स्नुषाम् । श्रेष्ठी स्वपुत्रमोक्षार्थी, यातुं तत्राऽन्वमंस्त सः ॥ ७ ॥ पुंवेषं परिधायाय, सा सती श्वशुरार्पितम् । नानापण्ययुता सर्व-नवीनाचपरिच्छदा ॥ ८ ॥ प्राचलत् पोतमारुह्य, शुभेऽह्नि शकुनैः शुभैः । दिनैः कतिपयैश्चाप-दन्यायपुरपत्तनम् ॥ ९ ॥ ( युग्मम् ) अपूर्वप्राभृतेनाथ, तत्र संतोष्य सा नृपम् । तदास-

गुरुमन्माना, भाटकाले गृहेऽवसत् ॥ २१० ॥ महेभ्यतनयः कश्चित्, सोमदत्ताऽभिधः सुधीः । अयोध्याया इहायात, इति
सा प्रथिता जने ॥ ११ ॥ लोभाभिभूतयाऽन्येद्युः, परिव्राजिकया तया । सादरं मागिवेषापि, भोजनाय न्यमन्त्र्यत ॥ १२ ॥
परं भोक्तुं व्रजन्ती सा, सुधीः स्वोत्तारके क्वचित् । शिक्षयित्वाऽमुचत् सप्त, नरान् प्रच्छन्नवीक्षकान् ॥ १३ ॥ परिव्राजिकया
प्रेष्य, पापया निजपूरुषम् । तत्रैकत्र क्षितौ स्वर्ण-द्रव्यं निक्षेपिता रहः ॥ १४ ॥ सरस्वत्या निदेशेन, गृहीत्वा वीक्षकैः
रहः । सा परिव्राजिकागेहे, द्रुमूले च न्यधीयत ॥ १५ ॥ क्रमेण स्वर्णद्रव्यार्थं, परिव्राजिकया तया । विवादे क्रियमाणेऽथ,
पूर्वेऽनृपसंसदि ॥ १६ ॥ महत्तरैर्व्यवस्थायां, विहितायां च पूर्ववत् । उत्तारके सरस्वत्याः, प्रथमं सा व्यलोकयत ॥ १७ ॥
तत्र तस्यामलब्धायां, परिव्राजिकया क्वचित् । जगामाथ विषण्णाया-स्तस्या गेहे सरस्वती ॥ १८ ॥ सर्वलोकसमक्षं च,
वीक्ष्य पूर्वमितस्ततः । तां शातन्यासभूमितो, नरैः पश्चादचीकृपत् ॥ १९ ॥ निरीक्ष्य निर्गतां तत्र, तां तदा सर्वसाक्षिकम् ।
विच्छायवदना दध्यौ, सा परिव्राजिका हृदि ॥ २२० ॥ नानाच्छद्मभिराजन्म, यद्वित्तं मेलितं मया । ही मे तदद्य दुर्दैवात्,
सर्वमेकपदे गतम् ॥ २१ ॥ यच्चेभ्यतनया दास्यं, कारिताः कुधिया मया । पूर्वं तन्मम तत्पापो-दयादद्य गतं
हहा ! ॥ २२ ॥ सरस्वती नृपामात्या-द्यनुमत्या ततोऽखिलम् । तस्या मुक्तामणिस्वर्ण-द्विपदादिकमग्रहीत ॥ २३ ॥ नियोज्य
दुष्टचरणां, तां निजे दास्यकर्मणि । तथा दासीकृतान् पूर्वं, सर्वानिभ्याङ्गजन्मनः ॥ २४ ॥ सत्कृत्याशनवस्त्राद्यै-र्हृद्यैः सा
कुशलाशया । स्वैरं स्वस्वपुरस्थाने, मानवे व्यसृजत् पुनः ॥ २५ ॥ ( युग्मम् ) मदीयदास्या यदासौ, महाभाग ! त्वमस्यतः ।
निष्ठितानीं त्वमेव, गृहकर्माणि चिन्तयन् ॥ २६ ॥ त्वन्नीरतं त्वां नेष्यामि, निजपुर्यां व्रजन्नहम् । इत्युक्त्वा देवदिन्नं तु,

स्वान्तिके तमतिष्ठिपत् ॥ २७ ॥ (युग्मम्) किञ्चित् प्रमुदितश्चित्ते, स्वदेशगमनाशयः । देवदिन्नोऽथ तत्राऽभूत्, तत्राद्दिष्टाऽखिलाऽर्थकृत् ॥ २८ ॥ अस्याऽद्भुतं महाभाग्यं, कौशलं चेभ्यजन्मनः । एषाऽपि घार्पिता येन, जगतो विस्मतारिका ॥ २९ ॥ श्लाघ्यमाना जनैरेवं, सर्वत्राथ सरस्वती । सञ्जातेष्टार्थसंसिद्धि-र्विक्रीयाऽऽत्मक्रयाणकम् ॥ ३३० ॥ महार्घ्यैर्मणिमुक्ताद्यै-, पोतमापूर्य वस्तुभिः । नृपमापृच्छते नीति-निपुणा चलनोन्मुखी ॥ ३१ ॥ (युग्मम्) तां तदाऽत्यर्थमभ्यर्च्य, दानसन्मानपूर्वकम् । नृपतिस्तनुमात्रेण, कृच्छ्रुद्धिमपोचयत् ॥ ३२ ॥ तत्रेभ्यान् दानसन्मानैः, सत्कृत्याऽथ यथाविधि । स्वदेशं प्रति साऽचालीत्, पोतेन परिवारयुक् ॥३३॥ अन्यदा पथि पुंवेषं, परिहृत्य सरस्वती । दिव्याऽलङ्कारनेपथ्या, देवदिन्नमभाषत ॥३४॥ ननु मामधुना किञ्चि-दुपलक्षयसि प्रभो ! । किमेतादिति सम्भ्रान्त-चित्तः सोऽपि न हीत्यवक् ॥ ३५ ॥ सा तदोवाच सैवाऽस्मि, त्वत्पत्नी सुन्दराङ्गभूः । परिणीय पितुर्गेहे, यां तदैवाऽमुचद् भवान् ॥ ३६ ॥ आचरन्त्यार्हतं धर्म-मेतावन्तमनेहसम् । स्थिता समाहितस्वान्ता, पितृश्वशुरवेश्मनोः ॥ ३७ ॥ महापदमिदानीं तु, तव विज्ञाय दुःसहाम् । पारिणामिकधीः प्रैषीत्, श्वशुरो मां तवान्तिके ॥ ३८ ॥ पुरतस्तु यथाजातं, सर्वं मत्यक्षमेव ते । आकर्ण्येत्थमभिज्ञात-पत्नीकः स महेभ्यभूः ॥ ३९ ॥ सर्वाङ्गोद्भिन्नपुलको-ऽप्यतीवानन्दमेदुरः । विलक्षास्यो मनाग् व्रीडा-वशान्नीचैर्व्यलोकयत् ॥ ३४० ॥ अथ सा विनयौचित्य-कुशला कुलबालिका । व्रीडाविषादापस्मारा-ऽपनोदाय जगाद तम् ॥ ४१ ॥ विषादमिति मा कार्षीः, परिव्राजिकया तया । यन्निर्जित्य च्छलेनाहं, नियुक्तो दास्यकर्मणि ॥ ४२ ॥ जातु नीचैर्भवेयुर्य-न्महान्तोऽपि विधेर्वशात् । परं तूच्चैस्तरास्ते स्युः, सत्कर्मोपक्रमैर्निजैः ॥ ४३ ॥ यदुक्तम्-जइवि गुरुखड्डिगहणे, भमकम्मो कहवि केसरी जाओ । तहवि हु मत्तगयाणं, पुणो वि कुंभत्थलं

दल्द ॥ ४४ ॥ सर्वोत्तमगुणः सर्व-कलासु कुशलोऽपि चेत् । तां नाऽजैषीः किमज्ञत्व-मियतैव तवाययौ ॥ ४५ ॥ यतः–
यदि नाम सर्षपकणं, शक्नोति करी करेण नादातुम् । इयताऽपि तस्य किं ननु, पराक्रमग्लानिरिह जाता ॥ ४६ ॥
त्वदन्यस्याऽपि सा दुष्टा, विजिग्ये मयकापि यत् । तन्मे सर्वोत्तमास्त्वत्तो, नाधीयं किमपीयता ॥ ४७ ॥ यतः–यत्तमो भूमिसद्मस्थं,
नाऽशकद्धर्तुमंशुमान् । न तस्मादतिशेते हि, दीपस्तदपि नाशयन् ॥ ४८ ॥ इत्याद्यैर्धैर्यवचनै–स्तमानन्द्य सरस्वती । विमोच्य वेषं
वास्यार्हं-मिभ्यार्हं पर्यधापयत् ॥४९॥ माण्याधिपत्यं सर्वेषु, यानपात्रजनेषु सः । तदाधिकमदीपिष्ट, मेघमुक्त इवाऽर्यमा ॥ २५० ॥
आराधयन्त्या विनयात्, शृङ्गाररसकुल्यया । मुक्त्वाऽन्तश्चित्तकालुष्यं, रममाणस्तया सह ॥ ५१ ॥ ततः प्रमुदिताश्चिरं,
पित्रोरुत्कण्ठितः क्रमात्, आगात् स्वनगरोपान्ते, कुशलः कुशलेन सः ॥ ५२ ॥ ( युग्मम् ) श्रेष्ठी सूनुस्नुषाक्षेमा–गमेन
मुदितस्तदा । राज्ञे मौक्तोपदापाणिः, प्रणम्याख्यत् सुतागमम् ॥ ५३ ॥ तत्प्रवेशोत्सवं कर्तुं, श्रेष्ठिने सोऽपि तोषभाक् ।
सच्छत्रचामराऽऽतोद्य–पट्टहस्तिनमार्पिपत् ॥ ५४ ॥ ततो नृपप्रसादांस्तं, सर्वमादाय तद्ययौ । स्वजनैरभ्ययुतः श्रेष्ठी, महर्द्ध्या
सुतसम्मुखम् ॥ ५५ ॥ पदोर्नमन्तमालिङ्ग्य–स्तम्भ स्नेहेन नन्दनम् । विहितस्वोक्तनिर्वाहां, ज्यालास्यकमलां स्नुषाम् ॥ ५६ ॥
दूराक्रमन्तीं विनयात्, पश्यन् स्निग्धदृशा च सः । संसारसुखसर्वस्वा–ऽनुभवं ह्यमन्यत ॥ ५७ ॥ ( युग्मम् ) सोत्साहं
वाद्यमानेषु, नानावाद्येषु वादकैः । पुरः पण्यपुरन्ध्रीषु, नृत्यन्तीषु च लीलया ॥ ५८ ॥ गीयमानं कुलस्त्रीभिः, पृष्ठे मङ्गल-
गीतिभिः । आनन्द्यमानं भट्टैश्चा–ऽभितो जयजयारवैः ॥ ५९ ॥ दीनदुःस्थार्थिषु स्वर्णा–शुकैर्वर्षन्तमब्दवत् । प्रशस्यमानापाश्चात्य–
भाग्यपुण्योच्चयं जनैः ॥ २६० ॥ आरोप्याथ गजे पुत्रं, वधूयुक्तं महोत्सवैः । हृष्टः शिरोधृतच्छत्रं, श्रेष्ठी प्रावेशयत् पुरे ॥ ६१ ॥
४ * *

( चतुर्भिः कलापकम् ) देवदिन्नं प्रियायुक्तं, प्रणमन्तं पदोस्ततः । माता चिरवियोगार्त्ता, हर्षाश्रुभिरसिञ्चत ॥ ६२ ॥ मुदा चैत्यं
गृहेऽभूवन्, प्रियङ्गोः सुन्दरस्य च । सत्पुत्रजन्मनीवाष्टौ, दिनान् वर्द्धापनोत्सवाः ॥ ६३ ॥ अथावसरमासाद्य, देवदिन्नं सरस्वती ।
शिरस्यञ्जलिमाधाय, विनयेन व्यजिज्ञपत् ॥ ६४ ॥ केनापि कारणेनाऽज्ञत्, परिणीय पतिर्हितम् । वराकी तद्विधाऽघार्त्ता,
दीक्षामियमुपाददे ॥ ६५ ॥ दुःखगर्भमिति स्पष्टं, ज्ञानगर्भमपि ध्रुवम् । मंस्यते मम वैराग्यं, लोकोऽयमिति हेतुना ॥ ६६ ॥
यदुक्तं बालचापल्यात्, त्वत्पुरो वाक्यमुद्धतम् । आरोपयामि मामाप्य-मेकमास्तदपीलि च ॥ ६७ ॥ आबाल्याज्जाततत्त्वत्वाद्,
विषयेभ्यो विरक्तहृत् । नाऽग्रहीषामियत्कालं, जिघृक्षुरपि सद्व्रतम् ॥ ६८ ॥ ( चतुर्भिः कलापकम् ) अथ
सर्वान्तरायाणां, निद्राणैः सुकृतैरभूत् । तत् स्वामिन्ननुमन्यस्व, मां दीक्षाप्रतिपत्तये ॥ ६९ ॥ इति
तद्भावमाकर्ण्य, तदा दूनमना जगौ । आबद्धाऽस्थिरदृढप्रेमा, देवदिन्नः सरस्वतीम् ॥ २७० ॥ धिग् मया
दुर्विदग्धेन, चिन्तयौचित्यवत्यपि । स्त्रीरत्ने त्वमियत्कालं, दुर्विनीते ह्यमन्यथाः ॥ ७१ ॥ अज्ञानतिमिरान्धस्य:,
याथातथ्येन मेऽधुना । प्राचकाशः पुनर्दीप-शिखेवात्मानमात्मना ॥ ७२ ॥ आविर्भाव्य तदात्मान-मित्थं गुणवति प्रिये ! ।
दृष्टा प्रमाणमधुना, किमकस्माज्जहासि माम् ॥७३॥ अपि च-प्रिये ! प्रशस्यमप्येतत्, तपस्तुर्याश्रमोचितम् । ताम्बूले शर्कराचूर्ण-
मिव युक्तं न यौवने ॥ ७४ ॥ स्वैः सार्वैः प्रिये ! माय-स्तत्त्वज्ञैरपि यौवने । भुक्त्वा वैषयिकं सौख्यं, वार्द्धके व्रतमाददे ॥ ७५ ॥
तदैतान् साम्प्रतं काम-भोगान् भुक्त्वा यथेप्सितम् । प्रतिपत्स्यावहे सार्द्ध-मेवावां वार्द्धके व्रतम् ॥ ७६ ॥ ततः पत्युपरोधेन,
तत्त्वज्ञाऽपि सरस्वती । प्राग्भोगफलमुक्त्यर्थ-मस्थात्तत्र गृहाश्रमे ॥ ७७ ॥ पुण्योपदेशैः पीयूष-देशीयैः सा पतिव्रता ।

प्रतिबोध्य पतिं शुद्ध–मर्हद्धर्ममशिक्षयत् ॥ ७८ ॥ हृदन्तः शुद्धसद्धर्म–परिणत्या क्रमेण सः । आवश्यकक्रियोद्युक्तो,
निश्चयः श्रावकोऽभवत् ॥ ७९ ॥ यदुक्तम्— सामग्गिअभावे वि हु, वसणे वि सुहेवि तहा कुसंगेवि । जम्मि न
हायइ धम्मो, निच्छयओ जाण तं सड्ढं ॥ ३८० ॥ आस्तिक्याद्यौवनेऽप्युच्च–द्धर्मानुष्ठाननिष्ठयोः । तनयस्नुषयोर्नित्यं,
पापभीरुहृदोस्तयोः ॥ ८१ ॥ संसर्गेणोपदेशैश्च, प्रियङ्गुश्रेष्ठिनो हृदि । नाऽतीवगुरुकर्मत्वाद्, धर्मः परिणतो मनाक्
॥ ८२ ॥ निखिलेष्वपि पूर्वोक्त–दूषणेषु पुरात्मनः । निवृत्ते नैकमप्यस्य, वयःपरिणतावपि ॥ ८३ ॥ धनधान्यमणिस्वर्ण–
रूप्यकुप्यादिमूर्च्छितः । मोहेन कामभोगेषु, नित्यतीव्राभिलाषवान् ॥ ८४ ॥ कुर्वन् मदीयं मदीय–मिति सर्वत्र सर्वदा ।
धर्मसत्कर्मनामापि, श्रेष्ठी जातु न बुद्धवान् ॥ ८५ ॥ ( युग्मम् ) चतुर्विधाऽऽर्तध्यानस्य, जातु रौद्रात्मनः क्वचित् ।
एवमेवाऽफलं जन्म, प्रियङ्गोः सर्वमप्यगात् ॥ ८६ ॥ ईदृग्भीदिमुपेतोऽपि, स्वायुःमान्ते स्वकर्मभिः । हहा प्रियङ्गुरुत्पन्नो,
विकलेन्द्रियजन्तुषु ॥ ८७ ॥ तत्र पापगतौ प्राप्तः, पापान्यार्च्य भूरिशः । अधोऽधो निपतन्नेके–न्द्रियजातौ स
यास्यति ॥ ८८ ॥ ततश्च जीवपिण्डेषु, तत्र कायेषु पञ्चसु । विपत्त्युत्पत्तिदुःखार्तो, भ्रमिष्यति चिरं भवे
॥ ८९ ॥ शोकसिन्धुनिमग्नात्मा, देवदिन्नोऽथ वत्सवान् । परलोकमुपेतस्य, प्रियङ्गोरौर्ध्वदैहिकम् ॥ ३९० ॥
संभूय स्वजनैर्न्यस्त–शोकव्यपगमोऽथ सः । कुटुम्बभारमारोप्य, प्रियङ्गुश्रेष्ठिनः पदे ॥ ९१ ॥ पापभीरुः
सदाक्षिण्यः, सत्यशीलदयानिधिः । शुद्धव्यवहृतौ निपुः, श्रीदेवगुरुभक्तिकः ॥ ९२ ॥ सार्वज्ञधर्मे श्रद्धालु–
र्निश्छद्महृदयः सुधीः । भवद्धिष्णुमहत्त्वर्द्धि–र्देवदिन्नोऽभवत् क्रमात् ॥ ९३ ॥ तं तादृक्पितृकल्पन्नं, वीक्ष्येदृशमवग् जनः ।

विपशान्तुपान्नाद्-कल्पेन्द्रो अभूत् । ॥ ९४ ॥ देवदिन्नसरस्वत्योः, समानस्नेहशीलयोः । चिरं भुञ्जानयोर्दिव्य-भोगान्
नानाविधान् सुखम् ॥ ९५ ॥ तनया विनयोपेता, रूपसौभाग्यशालिनः । चत्वारोऽथ वपुष्मन्तः, पुरुषार्था इवा-
भवन् ॥ ९६ ॥ ( युग्मम् ) पौरपुर्व्यविहृत्साः, सम्यग्ज्ञानक्रियाधनाः । अथ तत्रान्यदा जग्मुः, श्रीयुगन्धरसूरयः ॥ ९७ ॥
धीताः पुण्याग्निर्धान, मन्तुमपपुरमश्विरे । तृषिता इव कासार-मापूर्णममलैर्जलैः ॥ ९८ ॥ सरस्वत्या समं तत्र, श्रद्धालु-
हृदयः सुधीः । देवदिन्नोऽपि तद्वाग्या-मृतमापातुमागमत् ॥ ९९ ॥ दाहशान्तितृडुच्छेद-मलक्षालनकर्मभिः । अथ ते जङ्गम
भार-तीर्थमित्यमुपादिशन् ॥ ४०० ॥ स्वर्गापवर्गसम्प्राप्ति-प्रतिभूर्भवभीरुभिः । कार्यः कृपामयो धर्मः, शुद्धः सर्वात्मना
पुनः ॥ १ ॥ यतोऽत्र भवेत्जीवा, येनानीर्णेन कर्मणा । न तन्मनोवचःकार्यः, कर्तव्यं कुशलार्थिभिः ॥ २ ॥ कृताना-
पेक्षोऽन्य-परवशादिपाप्मनाम् । भवेद् दशगुणः प्रेत्य, यद्विपाको जघन्यतः ॥ ३ ॥ तीव्रतीव्रतरद्वेषा-ध्यवसायवशात्
पुनः । महाबलः प्रवृत्तः, स्यादसङ्ख्यगुणोऽपि सः ॥ ४ ॥ यदागमः—वहमारणअब्भक्खाण-दाणपरधणविलोवणाईणं ।
सव्वजहन्नो उदओ, दसगुणिओ इक्कसि कयाणं ॥ ५ ॥ तिव्वयरे उ पओसे, सयगुणिओ सयसहस्सकोडिगुणो । कोडा-
कोडिगुणो वा, हुज्ज विवागो बहुतरो वा ॥ ६ ॥ आस्तां परेषु मद्वेषा-चीर्णमुग्रं यथायथम् । धर्माख्यानमपि च्छद्म-गर्भं
स्यात्प्रद्युम्नतत् ॥ ७ ॥ यथा धर्मोपदेशोऽपि, च्छद्मगर्भो धनश्रियः । अभूत् मनागनीदुःख-हेतुत्वात् प्रेत्य दुःखदः ॥ ८ ॥
गगाढि – मंदिरप्रासादसंकीर्णे, धमन्तपुरपत्तने । शुद्धव्यवहारनिष्ठात्मा, त्यागी भोगी श्रियां निधिः ॥ ९ ॥ विहिताशेषदुष्कर्मा-
पदः प्रमादरतः । अभूद् धनेश्वरः श्रेष्ठी, धनधान्यसमृद्धिमान् ॥ ४१० ॥ श्रेयसी श्रेयसीभक्तिः, शीलसद्गुणशालिनी ।

लक्ष्मीरभिधया तस्य, दिव्यरूपश्रियाप्यभूत् ॥ ११ ॥ प्राच्यपुण्यानुभावेन, दृढस्नेहानुबन्धयोः । तयोर्भुञ्जानयोर्दिव्य–भोगान्
कालः कियान् ययौ ॥ १२ ॥ पाश्चात्येऽथ तमीयामे, सुखशय्यास्थयोस्तयोः । श्रुतिवर्त्माऽन्यदा प्रापत् पठ्यमानमिति
क्वचित् ॥ १३ ॥ यत्र न स्वजनसङ्गतिरुच्चै–र्यत्र नो लघुलघूनि शिशूनि ॥ यत्र नैव गुरुगौरवचिन्ता, हन्त तान्यपि गृहाण्यगृहाणि
॥ १४ ॥ अपुत्रस्य गृहं शून्यं, दिशः शून्या अबान्धवाः । मूर्खस्य हृदयं शून्यं, सर्वशून्या दरिद्रता ॥ १५ ॥ उत्पतन्निपतन्
रिङ्खन्, हसन् लालावलीर्वमन् । कस्याश्चिदेव धन्यायाः, क्रोडमायाति नन्दनः ॥ १६ ॥ अप्येकान्तसुखास्वादे, ततः प्रभृति
चेतयोः । अनपत्यतया चित्तं, सुतरां समतप्यत ॥ १७ ॥ भृशं सौख्योपभोगान्त–स्तद्दुःखमनयोरभूत् । कर्करः शर्कराचूर्ण–
स्यान्तरिव दुस्सहम् ॥ १८ ॥ नानासुरसुरीपूजा, योगभोगादिकं बहु । मिथ्यात्वमादिशन्मिथ्या–दृशोऽपत्यार्थमन्वहम्
॥ १९ ॥ परं विशुद्धसम्यक्त्वा–न्महाजैनतया तयोः । कदाचन मनो मेरु–निश्चलं नाचलन्मनाक् ॥ ४२० ॥ ( युग्मम् )
अर्हद्भक्तितपोदीन–दुःस्थदानादिकर्मभिः । प्राच्यान्तरायदुष्कर्म, क्रमाद् दलयतः स्म तौ ॥ २१ ॥ तस्याथ. श्रेष्ठिनोऽन्येद्यु–
र्जिनमभ्यर्च्य तत्पुरः । आर्हन्त्यध्यानलीनस्य, कायोत्सर्गेण तस्थुषः ॥ २२ ॥ अर्हद्भक्त्यानुभावेन, व्यतीताऽशुभकर्मणः ।
आसन्नाय तवाऽभीष्ट–सिद्धिः स्पष्टमिति ब्रुवन् ॥ २३ ॥ सत्कर्मतुष्टस्तत्रैत्य, पक्वाम्रफलयामलम् । तुष्टस्तदुष्टिकां चैकां,
कोऽप्यदृश्यः समार्पिपत् ॥ २४ ॥ ( त्रिभिर्विशेषकम् ) अर्पितं वीक्ष्य साश्चर्य, श्रेष्ठी हृष्टो व्यभावयत् । नूनं साधर्मिकः
कश्चित्, सुपर्वाऽयं प्रसत्तिमान् ॥ २५ ॥ हार्ददुःखापनोदाय, ममाऽदैतत् प्रमर्पणात् । भाविपुनसुतारूपा–ऽपत्यत्रयमसूचयत्
॥ २६ ॥ ( युग्मम् ). ततो विशेष्य सद्धर्म–कर्महृष्टहृदोस्तयोः । सुनद्वयसुतारूपा–ऽपत्यत्रयमभूत् क्रमात् ॥ २७ ॥
५

असमसमधनस्वामी, जातोऽयमिति निर्ममे । श्रेष्ठी धनपतीत्याख्यां, तत्राद्यस्याऽङ्गजन्मनः ॥ २८ ॥ तन्नाम्नश्चानुसारेण, पाश्चात्याऽपत्ययोः क्रमात् । धनावहो धनश्रीश्चे–त्याख्यामेष व्यधात्ततः ॥ २९ ॥ समये सदुपाध्यायात्, सर्वाः समुचिताः कलाः । सुतौ दुहितरं चाथ, ग्राहयामासिवान् पिता ॥४३०॥ व्यवहारिसुते नाम्ना, पद्मश्रीकमलश्रियौ । श्रेष्ठी महामहेनाथ, पुत्रयोः पर्यणाययत् ॥ ३१ ॥ सुतेन सुन्दरेभ्यस्य, रूपसौभाग्यशालिना । धनश्रियमपि प्राप्त–यौवनामुदवाहयत् ॥ ३२ ॥ स्थित्वा दश दिनीं सापि, सानन्दं श्वशुरौकसि । मिलनोत्कण्ठिता पित्रो–राजगाम पितुर्गृहे ॥ ३३ ॥ तावदाशूत्थितोदग्रा–ऽसाध्यव्याधिव्यथाभरः । तस्या दुर्दैवतोऽस्मात्, पतिः पञ्चत्वमाप्तवान् ॥ ३४ ॥ श्रुत्वा स्वपतिपञ्चत्व–प्रवृत्तिमथ दारुणाम् । धनश्रीर्हृदि दुःखार्ता, विलपन्तीत्यचिन्तयत् ॥ ३५ ॥ अत्युग्रमुत्कज्वलन–ज्वालेवातीव दुःसहा । इयं कथं हि सोढव्या, बालवैधव्यवेदना ॥ ३६ ॥ समापयाम्येकपदे, दुःखमेतन्महत्ततः । ज्वालामालाकुलेऽद्यैव, हुत्वात्मानं हुताशने ॥ ३७ ॥ शोकार्तैः स्वजनैस्तत्र, मिलितैः साश्रुलोचनैः । सानुकम्पमथालोक्य–माना सा तातमित्यवक् ॥ ३८ ॥ प्रसद्य सद्यस्तातात्र, दद्याः काष्ठानि मेऽधुना । पतिमार्गानुसरणा–द्धाभरेखा सतीषु यत् ॥ ३९ ॥ अथोत्सङ्गे निवेश्यैतां, पिताप्याह सगद्गदम् । वत्से ! साहसकर्मेदं, न तत्त्वज्ञजनोचितम् ॥ ४४० ॥ ईदृग्नृजन्मसज्ज्ञानं, मुधा निर्गम्यते कथम् ? । मुग्धे ! यत्र क्षणेनापि, भवेत् कर्मक्षयो महान् ॥ ४१ ॥ यदुक्तम्–जं अन्नाणी कम्मं, खवेइ बहुआहिं वासकोडीहिं । तं नाणी तिहिंगुत्तो, खवेइ उसासमित्तेण ॥ ४२ ॥ वत्से ! वह्निप्रवेशाद्यैः, कष्टैरप्यतिदुस्सहैः । शुभभावजुषो जीवा, व्यन्तरीभावमाप्नुयुः ॥ ४३ ॥ यदागमः– "उज्जुगहत्तिसभक्खण-जलजलणपवेसतण्हछुहदुहओ । गिरिसिरपडणाउ मया, सुहभावा हुंति वंतरिया ॥ ४४ ॥ दीपं नियमितं पात्रे,

मान्त्रिकास्ताडयेद् यथा । तपोऽग्निना तथात्मानं, वपुस्तं ताडयेत् सुधीः ॥ ४५ ॥ परं तत्कालमुद्दीने, दाहभीत इवात्मनि ।
निर्जीववपुषः कस्मै, गुणाय ज्वलनं शुभे ॥ ४६ ॥ भर्तृमार्गानुसरणं, पत्नीनां काष्ठभक्षणात् । तदपि व्यवहारेण, वस्तुवृत्त्या
तु नो मनाक् ॥ ४७ ॥ परलोकजुषो जीवाः, स्नेहात् सह मृतावपि । विभिन्नगतयो यत स्युः, पारवश्येन कर्मणाम्
॥ ४८ ॥ रमावप्युक्तम्— रुदता कुत एव सा पुन–र्न शुचा नानुमृतेन लभ्यते । परलोकजुषां स्वकर्मभि–र्गतयो भिन्नपथा
हि देहिनाम् ॥ ४९ ॥ तन्मुक्त्वा बालमरणा–ऽध्यवसायममुं हृदः । आस्तिक्यादार्हतं धर्मं, सर्वदुःखौषधं सृज ॥ ४५० ॥
यथार्हं ददती दानं, दधती शीलमुज्ज्वलम् । तन्वती च तपः शक्त्या, सुखं तिष्ठ शुभाशया ॥ ५१ ॥
किञ्च–नित्याऽऽस्थानतो भूर–मत्यासन्नात् पितुर्गृहे । अवज्ञा मे भवित्रीति, मा शङ्किष्ठा मनाग् हृदि ॥ ५२ ॥ त्वदत्तं मद्गृहे
सर्वं, भोक्ष्यते परिधास्यते । सर्वं ममाणे सर्वस्य, त्वत्कृतं च शुभाशुभम् ॥ ५३ ॥ सुधासारैरिवाश्वास्य, वचनैरिति शीतलैः ।
श्रेष्ठी न्यवर्तयत् पुत्रीं, मरणाध्यवसायतः ॥ ५४ ॥ धनश्रीः पितृवेश्मस्था, ततः संविग्नमानसा । श्रद्धया पुण्यकृत्यानि, तनुते
नित्यमुद्यता ॥ ५५ ॥ अपत्याऽतुल्यवात्सल्या–त्तथास्याः पितरौ क्रमात् । आजन्माऽऽराद्धशुश्राद्ध–धर्मौ स्वर्लोकमीयतुः ॥ ५६ ॥
हा भ्रातृभ्रातृजायानां, स्वार्थैकस्वपतात्मनाम् । व्यवहारस्य वैषम्या–द्य तौ पितरौ विना ॥ ५७ ॥ अग्रतो मम निर्वाहः, कथं
नाम भविष्यति । इत्थं विकल्पसङ्कल्पै–र्दुःखार्ता च रुरोद सा ॥ ५८ ॥ ( युग्मम् ) कृत्वाग समये पित्रो–र्भ्रातृभ्यामौर्ध्व-
देहिकम् । धनश्रीः स्वजनाध्यक्षं, हर्दिमेत्येत्यमोच्यत ॥ ५९ ॥ त्वमेव मुख्या मातेव, संमत्यस्मद्गृहे ततः । भ्रातृजाये
नियुञ्जीथा, यथार्हं सर्वकर्मसु ॥ ४६० ॥ स्वयमारम्भनिर्मुक्ता, षड्विधावश्यकोद्यता । सत्पात्रे ददती दानं, कृतार्थय

निजं जगुः ॥ ६१ ॥ पतेः सविनयौचित्य-र्वचनैः सोदरोदितैः । अतीव गुर्व्यभूद् भ्रातु-र्जायादिस्वजनेषु सा ॥ ६२ ॥
कस्माद्विगतनोत्साय, धनश्रीः सर्वकर्मसु । ययाईं स्वप्रजावत्यौ, नित्यं भावर्तयत् सुधीः ॥ ६३ ॥ भ्रातुर्जाये अपि श्रेष्ठ-
कुलशीलतयाऽन्वहम् । स्वननन्यामिवाऽत्यन्तं, तस्यां स्नेहं बबन्धतुः ॥ ६४ ॥ सन्ध्यावश्यककर्माणि, कृत्वा तिस्रोऽपि ता
मिथः । तत्त्वजिज्ञासया नित्यं, धर्मगोष्ठीं वितन्वते ॥ ६५ ॥ अथ दुःस्थितदीनेभ्यो, दयादानं निरन्तरम् । श्रद्धादानं
सुपात्रेभ्यः, सभूषणमदूषणम् ॥ ६६ ॥ अर्थिभ्योऽचितस्पदानं च, धर्मस्थाने गता कचित् । धनश्रीर्ददती स्वैरं, सर्वत्र श्लाघ्यते
जनैः ॥ ६७ ॥ ( युग्मम् ) श्लाघा ननान्दुरन्येषु-र्निशम्य जनताऽऽननात् । स्निग्धे अपि प्रजावत्यौ, मनाग् हार्दि
पिपिहितः ॥ ६८ ॥ ननान्दुः कोऽस्य गेहस्य, सम्बन्धात्तद् व्ययत्यसौ । आवयोरेव हा द्रव्य-मित्थं विमृशतः पुनः ॥ ६९ ॥
मात्रिरेस्मिकनारीणां, पुरः किञ्चिदसूयया । अवज्ञावचनान्युच्चा-र्वचानि पुनराहतुः ॥ ४७० ॥ पारम्पर्येण तद्भर्तु-र्जायोक्तमवगत्य
सा । किञ्चिदुत्पन्नहृदयानुतापा व्यमृशत् सती ॥ ७१ ॥ प्रायः सर्वाः प्रजावत्यः, सर्वत्रेदृग्विधाः किल । ततस्तद्वाक्यदोदूया, का
नामाऽऽनीयते हृदि ! ॥ ७२ ॥ परं दत्तं कृतं चापि, भ्रातृभ्यां रोचते न चेत् । मुधैव सद्मनो वेष्टि-मियती तत्करोमि किम् ? ॥ ७३ ॥
रोचते येन तद्भ्रातु-र्जायोक्तैः किमु निष्फलैः । परीक्षे तदहं भ्रात्रो-र्मदास्या हृदि कीदृशी ॥ ७४ ॥ ( युग्मम् ) अग्रजे
स्वनिद्रासन्ने, ततोऽन्येद्युर्धनश्रिया । सायं धर्मविचारान्तः, पद्मश्रीरित्यमोच्यत ॥ ७५ ॥ धर्मोऽयमेव नारीणां, शुभे सर्वबलेन
यत् । स्थाप्यते शाटिका शुद्धा, स्त्रियन्त्यैर्बहुभाषितैः ॥ ७६ ॥ अग्रजस्तद्वचः श्रुत्वा, दध्यौ हृदि विषादभाक् । नूनं विलुस-
शीलेयं, कनिष्ठे सहचारिणी ॥ ७७ ॥ तथ्यपथ्यमिताऽपाप-वचना शीलशालिनी । शास्तीत्थमेतां कुशला, भगिनी कथम-

न्यथा ? ॥ ७८ ॥ वित्तैः क्लेशार्जितैः पुण्णं–स्तदेतां पुंश्चलीमहम् । हहा व्यधामियत्काल–मसतीपोषणं मुधा ॥ ७९ ॥
सुरूपयाऽप्यलं दोप–दुष्टया तन्ममाऽन्यया । एवं विरक्तः स भृशं, मास्तवान् वासवेश्मनि ॥ ४८० ॥ समेतां समये पद्म–श्रियं
तत्र रुपारुणः । मा स्प्राक्षीर्मां महापापे !, निर्याहीत्यवदच्च सः ॥ ८१ ॥ तत्रैवं कोपवचनै–स्तर्जिता सा वियोगिनी । सुदती
रुदती दध्यौ, किमागो ही मया कृतम् ॥ ८२ ॥ स्वागः किमप्यपश्यन्ती, स्मारयन्त्यपि सा निशि । लुठन्ती केवलक्ष्मायां,
दुःखमत्यन्तमन्वभूत् ॥ ८३ ॥ भृशोत्पन्नाऽधृतिः स्वल्प–पानीये शफरीव सा । त्रियामामपि तां मेने, शतयामाऽधिकां
हहा ॥ ८४ ॥ विच्छायवदना मातः, सा पप्रच्छे धनश्रिया । वीक्ष्यसे सुभ्रु ! हा संम–स्तुन्मनो दुर्मनाः किमु ॥ ८५ ॥
सरला साप्यवक् सर्वं, निशावृत्तं यथास्थितम् । सङ्केतमूर्त्या हृदये, हसन्ती साऽप्युवाच ताम् ॥ ८६ ॥ मा धा विषादं
यन्मुग्धे, प्रियं क्रुद्धमपि त्वयि । तथा युक्त्याऽनुनेष्यामि, यथा स्नेक्ष्यति पूर्ववत् ॥ ८७ ॥ अथ स्वगृहदुर्वृत्तो–त्पन्नचित्तभृशाऽ-
धृतिः । भ्राताप्यवसरे पृष्टो, मृदुवाक्यैर्धनश्रिया ॥ ८८ ॥ अयं भ्रातस्तवास्येऽद्य, कालिमा किं निमित्तकः । पत्नीदुर्वृत्तमाचष्ट,
विश्वस्तः सोऽपि तत्स्वसुः ॥ ८९ ॥ साप्याऽऽपद् भ्रातरं पद्म–श्रियं ब्रूपे किमीदृशीम् ? । असंभाव्यं द्वितीयेन्दु–कलायामिव
लाञ्छनम् ॥ ४९० ॥ दृष्टं श्रुतं वा क्वचन, त्वयेदं यदि तद् वद । अन्यथा तु महासत्या, दोपो वक्तुं न युज्यते ॥ ९१ ॥
सोऽप्यूचे जानती सर्वं, ममाऽपलपसि स्वसः ! । यत्सायं शाटिकेत्यादि–गिरा तां शिक्षयन्त्यभूः ॥ ९२ ॥
अध्वभ्रष्टे यथाऽध्वोक्तिः, स्खलिते चावलम्बनम् । शीलशिक्षा तथा शील—भ्रष्टे स्पष्टमिदं ध्रुवम् ॥ ९३ ॥
सा स्मित्वाऽप्यदहो मौग्ध्यं, सुमहद्विदुषोऽपि ते । व्यङ्ग्यार्थान् कल्पयस्येव–माऽऽस्मगोष्ठीवचस्सु यत् ॥ ९४ ॥

प्रागर्नीकृत्यच्चांसि, मायोऽन्याच्छादमभ्रवन् । नारीणां सर्वपापेषु, महद् दौःशील्यपातकम् ॥ ९५ ॥
इत्यान्यगोष्ठ्यामकरोः, स्वभार्येव तन्मया । नहि तस्यास्तु दुर्वृत्त-प्रवृत्ताया निवृत्तये ॥ ९६ ॥ पतिव्रतायामेतस्यां,
नरीनरपि हायम् । मा शङ्किष्ठा मुधा वीर !, दुग्धान्तः पूतरानिव ॥ ९७ ॥ उत्तीर्णः सद्विकल्पोऽथ, वचनप्रत्ययात् स्नुषः ।
मामपा धनदानैः प्रीतिं, मान्वन् पत्रश्रियापथान् ॥ ९८ ॥ एवमेवान्यदासत्रे, धनश्रीश्च धनावहे । ऊचे धर्मविचारान्त-स्तत्पत्नी
रमम्नधियम् ॥ ९९ ॥ वचः मयत्रैर्बहुलैः, किं शुभे जनरञ्जनैः । धर्मोऽयमेव नारीणां, शुद्धिर्भवति यत्करे ॥ ५०० ॥
धनावहस्तदाकर्ण्य, तद्दुःखं हृदि दध्यिवान् । स्तैन्यस्वभावो मत्पत्न्याः, कुल्याया अपि हा ध्रुवम् ॥ १ ॥ स्नुषेयं ध्रुवमित्येतां,
शिक्षयेत् कथमन्यथा । न विना स्वाम्निं किञ्चि-द्रभोऽप्यर्हति यत्करम् ॥ २ ॥ पूर्ववद् दोषमाशङ्क्य, स विषादमनाः
मृशा । न्यरमर्मंत् प्रिया सोऽपि, समेतो वासवेश्मनि ॥ ३ ॥ तथैव रजनीमेषा-प्यनैषीदतिदुःखिना । पृष्टा धनश्रियां
मान-म्लानाऽऽदौदियाऽगिनम् ॥ ४ ॥ आभाष्य वचनैः शीत-शीतलैस्तां भजावतीम् । अजानतीव दम्भेन, रहस्यूचे
धनावहम् ॥ ५ ॥ अथाऽऽनृपः प्रिय भ्रात-रकस्मात् कमलश्रियम् । सोऽप्याह मत्पुरो ह्यस्या-स्तत्कथां नाम मा ग्रहीः ॥ ६ ॥
नाऽस्यान्यद् विकलो गेहे, या क्षणं न करोति ते । तस्यामीदृगसम्भाव्यं, सम्भावयसि किं हहा ! ॥ ७ ॥ इन्द्राणीप्यं स्वी
ध्यान्ते, कृशानुमिव नाऽम्बुनि । अस्यामीषदपि स्तैन्य-दोषं न श्रद्धे हृदि ॥ ८ ॥ नाऽस्याः स्तैन्यस्वभावश्चेत्, किमित्येता-
मशिक्षयः । पृष्टा धनावहेनेति विहस्य न्यगदत् पुनः ॥ ९ ॥ व्यग्रः स्वकार्ये पुरुषो, यात्यायाति च कर्हिचित् । सवरक्षा-
निपुणा गौः, परं जातु न मुञ्चति ॥ ५१० ॥ साऽपि मुष्णाति चेद्गेहे, तत्र रक्षाकरस्तु कः ? । यत् स्वकर्म मृजत्युपे,

शिरियकं तु [illegible] वक्ष्यते ॥ ११ ॥ वन्धो ! विरुद्धं तत्पुम्भ्यः, स्तैन्यं स्त्रीणां विशेषतः । इति ज्ञापयितुं चोचे, मयैतदिति
निश्चिनु ॥ १२ ॥ इति वाक्यैः स्वसुस्त्यक्त-दोषाऽऽशङ्को धनावहः । पूर्ववन्मधुराऽऽलापैः, पुनः पत्नीमापिमिणत् ॥ १३ ॥
शुभं वाप्यशुभं सर्व, शुभमेवात्र मत्कृतम् । मन्येते भ्रातरौ स्नेहा-दिति सञ्जातनिर्णया ॥ १४ ॥ धनश्रीरथ दानादि-पुण्यं तेने
तथैव सा । अदमत्य मजायत्यो-रुच्चावचवचस्तातिम् ॥ १५ ॥ (युग्मम्) मायागर्भोपदेशेन, तेनान्याऽसुखहेतुना । बध्नाति स्म
परं कर्मा-शुभवेयमसौ दृढम् ॥१६॥ पश्चाऽपि धनपत्याद्याः, संविग्नमनसः क्रमात् । प्रव्रज्यामथ निष्पापां, प्रतिपद्य ययुर्दिवम् ॥१७॥
पाश्चात्यभवसंस्कारात्, स्नेहार्द्रमनसो मिथः । तत्र ते विपुलान् काम—भोगान् बुभुजिरे चिरम् ॥ १८ ॥ अथाऽऽस्ते
भरतेऽत्रैव, साकेतपुरपत्तनम् । पुरहूतपुरस्पर्द्धि, वर्धिष्णु विभवार्द्धिभिः ॥ १९ ॥ अशोकः श्रेष्ठ्यभूत्तत्रा-ऽस्तोकश्लोकः श्रियां
पदम् । तस्याऽभूत् श्रीमती नाम्ना, पत्नी प्रीतिमती सती ॥ ५२० ॥ भुक्ताऽवशिष्टसत्कर्मा-नुभावेन ततश्च्युतौ । पुत्रत्वेनोदपत्सातां,
भ्रातरौ तौ तयोः क्रमात् ॥ २१ ॥ आद्योऽभूत् सागराद् दत्तः, समुद्राच्च परस्तयोः । कलाकलापकुशला-वभूतां च क्रमेण तौ
॥ २२ ॥ स्वर्गाच्च्युत्वा धनश्रीश्च, हस्तिनागपुरे परे । शङ्खस्य श्रेष्ठिनो लक्ष्मी-गेहिन्यां समभून् सुता ॥ २३ ॥ अन्वर्थसंज्ञा
सर्वाङ्ग-सुन्दरी [illegible] शनैः शनैः । वर्धमानेन्दुलेखेव, कलासंपूर्णतामगात् ॥ २४ ॥ व्यवसायार्थमन्येद्यु-स्तत्राऽशोकः समीयिवान् ।
शङ्खं न्यगादीत्तां वीक्ष्य, चक्षुषोरमृताञ्जनम् ॥ २५ ॥ श्रेष्ठिन् ! सागरदत्तस्य, मदाद्यतनुजन्मनः । रूपसौभाग्यसौजन्यै-रियं
समुचिता पत्नी ॥२६॥ अर्हसम्बन्धविज्ञानात्, श्रेष्ठी शङ्खोऽपि हृष्टहृत् । प्रक्षाल्य चरणौ तस्मै, ददौ सर्वाङ्गसुन्दरीं ॥ २७॥ अथ
सागरदत्तेनो-ढा सर्वाङ्गसुन्दरी । अशोकश्रेष्ठिसङ्घेभ्य-विहितैर्विविधोत्सवैः ॥२८॥ साऽपि पत्या समं गत्वा, साकेतपुरपत्तने ।

शित्वा दशदिनीं चागाद्, मुदिता स्वपितुर्गृहे ॥ २९ ॥ स्वयं सागरदत्तोऽथ, पित्राऽऽदिष्टः प्रहृष्टहृत् । पत्नीमानेतुमन्येद्यु-
स्तत्रागात् श्वसुरौकसि ॥ ५३० ॥ तत्र तथ्यैस्तथाऽऽतिथ्यैः, प्रीतः सायं स धीनिधिः । वासवेश्मनि पल्यङ्केऽध्यास्तोपरितनाक्षितौ
॥ ३१ ॥ स्फारशृङ्गारमाधाय, ध्वजिनीव मनोभुवः । यावदद्यापि नायाति, तत्र सर्वाङ्गसुन्दरी ॥ ३२ ॥ तावत्तत्प्राच्यदुष्कर्म-
प्रेरितः पुरुषाकृतिः । मुक्तं गवाक्षे प्रक्षिप्य, व्यन्तरः कोऽपि कौतुकी ॥ ३३ ॥ प्रीतिपात्रं किमद्याऽत्र, नाऽऽस्ते सर्वाङ्गसुन्दरी ।
गुप्तप्राज्ञतरमित्युक्त्वा, तत्क्षणात् क्वचिदप्यगात् ॥ ३४ ॥ (युग्मम्) वीक्ष्य सागरदत्तोऽथ, तं वृत्तान्तमनीदृशम् । बाढं
विषादवान्सो, मनस्येवं व्यभावयत् ॥ ३५ ॥ सर्वाङ्गसुन्दरीरूप-व्यामूढो रन्तुमन्वहम् । नूनं कश्चिदुपैत्यत्र, सुरो विद्याधरोऽथवा
॥ ३६ ॥ अन्यथा कथमत्राऽस्य-मत्रागत्येति पृच्छति ? । मूलतस्तदियं जाने, कुलटा कुलपांशुला ॥ ३७ ॥
अन्यत्राऽऽसक्तचित्ता च, दयिता गलिताशीला । न प्रसादयितुं शक्या, पत्या गुणशतैरपि ॥ ३८ ॥
यतः-अकाण्डकोपिनो भर्तु-रन्यासक्तेश्च योषितः । प्रसत्तिश्चेतसः कर्तुं, शक्रेणापि न शक्यते ॥ ३९ ॥
स्निग्धपापिनमास्याः, कोऽत्र वीक्षिष्यते मुखम् । तत्पापां परिहृत्यैता-मधुनैव व्रजाम्यहम् ॥ ५४० ॥ इत्थं विरक्तः स भृशं,
पत्नीं हित्वा पतिव्रताम् । गवाक्षवर्त्मनोत्तीर्य, सहसा स्वपुरेऽगमत् ॥ ४१ ॥ तद्वृत्तं चाऽखिलं पित्रोः, श्यामास्यः स रहोऽ-
वदत् । स्निग्धवाक्याऽपूर्णैरेतं, तमप्रीत्यमसिश्वताम् ॥ ४२ ॥ वरं कुलकलङ्काय, नाऽऽनीता साऽत्र पुंश्चली । किं करिष्ये विना
पत्नीं, न्विति मा पा मुधा हृदि ॥ ४३ ॥ तुल्यां शीलवतीं रूप-सौभाग्यादिवानिं कनीम् । अन्यामुद्वाहयिष्यावो, यत्र सद्यः
स्याद्वन्मनः ॥ ४४ ॥ पतैस्तुच्छान्मल्य-पिशुनैर्वचनैस्तयोः । हित्वा विषादवैधुर्यं, स मनाक् सुखितोऽभवत् ॥ ४५ ॥ इतश्च

नारत्नम्बुला, पद्मश्रीकमलश्रियौ । कौशलायां महापुर्यां, नन्दनश्रेष्ठिनो गृहे ॥ ४६ ॥ पत्न्यां प्रीतिमतीनाम्न्यां, लावण्य-
सम्मितश्रियौ । अभूतां श्रीमतीकान्ति-मतीनाम्न्यौ सुते उभे ॥ ४७ ॥ ( युग्मम् ) यौवने मदनक्रीडा-वनेऽथ युवमोहने । तयो-
र्वपुषि सौन्दर्य-शोभाऽभूदतिशायिनी ॥ ४८ ॥ ते मिथो निबिडस्नेहाद्, वियोगं सोढुमक्षमे । एकत्र श्वशुरकुले, क्वचिद् दित्सति
तातस्थिता ॥ ४९ ॥ दुर्निवारं सपत्नीत्वे, वैरं स्नेहेऽपि संभवेत् । इत्येकभर्तुर्ने पुन-स्ते प्रदत्ते स धीनिधिः ॥ ५५० ॥ तद्गुणैः
कुलशीलाद्यै-स्सदृशौ भ्रातरौ वरौ । गवेषयन् स सर्वत्र, साकेतपुरमागमत् ॥ ५१ ॥ अशोकपुत्रयोस्तत्र, विभाव्य हृदि योग्यताम् ।
[illegible] तौ श्रेष्ठिनः पुत्र्यौ, ते सागरसमुद्रयोः ॥ ५२ ॥ श्रीमतीं सागराद्दत्तः, सुलग्ने परिणीतवान् । समुद्रदत्तः सुकान्ति-स्तत्र
कान्तिमतीं पुनः ॥ ५३ ॥ शीलसौभाग्यशालिन्यौ, पत्न्यौ प्राचीनजन्मनः । ते प्राप्य निबिडप्रीती, तौ जातौ सुखिनौ
भृशम् ॥ ५४ ॥ अथ [illegible], सदा सर्वाङ्गसुन्दरी । अनालोक्य पतिं तत्र, विषण्णा ह्यचिन्तयत् ॥ ५५ ॥ मत्कृतेऽ-
भ्यागतः प्रेम्णा, सखोऽहं शीलशालिनीम् । साम्प्रतं हन्त कुत्राऽगा-दकस्मात् परिहृत्य माम् ॥ ५६ ॥ अथ स्नेहेऽपि यद्
योगा-ऽभिसारी पतिरित्यगात् । तज्जाते प्रथमग्रासे, मक्षिका न्यपतत् पुनः ॥ ५७ ॥ स्नेहालापं विनाऽप्येवं, भर्ता यदरुप-
मपि । तस्मन्ने न सरोऽप्यापि, खाते माम् मकरोऽविशत् ॥ ५८ ॥ ममेन्द्रियसुखाशंसा-वल्लरी हृत्प्रसृत्वरी ।
मायुषितास्म निर्मुक्ते, हा दैवेन दुरात्मना ॥ ५९ ॥ भर्तृत्यागेन दौःशील्य-पिशुनेनाऽमुनाधुना । हन्त दुःखाकरोत्येवं,
हे दैव ! दुष्टं माम् ॥ ५६० ॥ व्यर्थी कृतमहाहं-दैवोपालम्भजल्पनैः । यन्मे प्राक्कृतकर्मैव, नूनमत्राऽपराध्यति ॥ ६१ ॥
नो निरोपचारिणी, यद्वै पतिरित्यगात् । एवमप्यमलं शीलं, धर्ममूलमुपास्यते ॥ ६२ ॥ आगोहीनापि हा दीना, पत्या

पतिव्रताऽमुना । पितुस्तथा वयस्यानां, दर्शयिष्ये कथं मुखम् ? ॥ ६३ ॥ सर्वाङ्गसुन्दरीत्यार्त-ध्यानावर्ते निपेतुषी । तद्वृत्तं मरणाऽऽप्य, पत्रीदं न्यगदत् पितुः ॥ ६४ ॥ व्यलुलोकत् स सर्वत्र, दुःखितो हृदि तं जनैः । न तु क्वचिदपि प्रापत्, रत्नं भ्रष्टमिवाम्बुधौ ॥ ६५ ॥ मा कार्षीरार्त्तिं वत्से !, कार्यात्कुत्राऽपि गतः क्वचित् । तव प्राणप्रियो धन्यैः, स्वल्पैरेव समेष्यति ॥ ६६ ॥ इत्याश्वासयन्नेनां, सर्वदा मधुरोक्तिभिः । साकेतायातमर्त्याऽऽस्यात्, श्रुतवानिति सोऽन्यदा ॥ ६७ ॥ मान्यपत्नीविरक्तात्मा, पद्मोत्तरायनन्दनः । क्षिप्रमन्यामुपायंस्त, गुणैः स्त्रीशिरोमणिम् ॥ ६८ ॥ व्यथाकरकर्णयोस्तस्मधुरवचनमागुनम् । सर्वाङ्गसुन्दरीमङ्के, निवेश्य न्यगदच्च सः ॥ ६९ ॥ आकर्ण्य पाणिग्रहणं, वरस्याऽपरयोषितः अध्यासीत् पुत्रिकानाथ, सा विरक्ता सती ॥ ५७० ॥ एनोमूलपनन्तैनः-भाव्यं धिग् जन्म योषिताम् । परायत्तेन्द्रियाशेषगुणमानस्मनोऽपि यत् ॥ ७१ ॥ दासीवन्नीचकृत्यानि, यद्वा मोहाद् वितन्वते । नार्यः पत्युर्गृहे नित्यं, हा धिक् तान् विषयानपि ॥ ७२ ॥ कुर्वन् विषयावेशा—तृष्णातरलचेतसः । क्रियन्तेऽपारसंसारे, निष्पुण्याः प्राणिनो हहा ! ॥ ७३ ॥ सर्वेऽन्योऽन्यतो भोगान्, मुग्धा तत्तन्मात्सरात् । भ्रंशन्तुभाभ्यां लोकाभ्यां, हा केचित् कामविह्वलाः ॥ ७४ ॥ उत्कृष्टसंपदाभोगा, भोगास्तुच्छाः परात्मनाम् । अनन्तसंविदानन्द—व्रतिभूयोग एव [redacted] ॥ ७५ ॥ प्रायोऽस्मादिभवाऽभ्यासा—भीरवप्रीचगामिनः । नित्यं पापक्रियानिष्ठा, धर्मं केऽपि न जानते ॥ ७६ ॥ केचिच्च धर्मं जानन्तः, सम्यक् श्रद्दधतः पुनः । गार्हस्थ्यदशया मोक्तुं, शरणारण्यादपात् ॥ ७७ ॥ यत्र गृहस्थाश्रमे धर्मो, यत्राऽप्यारम्भभीरुभिः । एकोदराय षट् जीवा, विराध्यन्ते दिने दिने ॥ ७८ ॥ स्वर्गापवर्गनिःश्रेणी, वेणी शान्तरसाऽम्भसः । तदुन्नाय तपस्यैव, दुःखदाहोपशं मम ॥ ७९ ॥ इति-

दुर्गान्तराज्ञान—गर्भवैराग्यरञ्जितः । प्युच्छिद्याऽपिपासेशा, साऽयाचत् पितरं सती ॥ ५८० ॥ मद्दुःखदुःखितश्चित्ते, सन्तापं तात ! मा कृथाः । यतो यदियं त्यक्ता, मिथ्याऽभ्यासेन मूलतः ॥ ८१ ॥ यस्मिञ्चञ्चपरमला—नन्तशर्मसु सस्पृहा । दुःखैकसारं संसारं, मोक्तुमिच्छुः पुराऽप्यहम् ॥ ८२ ॥ अपेक्ष्यमाणाऽनुमतिः, पत्युश्चान्येयताऽभवत् । नूनं निर्नतिपोः पुंस—स्तदयं मुरजध्वनिः ॥ ८३ ॥ गगनागानानुपन्यस्य, दुष्कृते च समस्त मे । साम्प्रतं प्रव्रजिष्यामि, सर्वव्यासङ्गवर्जिता ॥ ८४ ॥ श्रेष्ठिनाऽप्यथ हृष्टेन, प्रसारीनिरस्तवेदिता । सर्वस्वजनयुक्तेना—नुमता सा शुभाशया ॥ ८५ ॥ व्ययित्वा शुच्या स्वात्म—वित्तं क्षेत्रेषु सप्तसु । मधीते गुरुनापापा, मायानीदिमुक्तेरसवैः ॥ ८६ ॥ ( युग्मम् ) शुद्धाचारनियुक्तास्या, वियुक्ता पापकर्मभिः । स्वाध्यायाऽध्ययनोयुक्ता, युक्ता मुक्ताऽमलैर्गुणैः ॥ ८७ ॥ गताभिमाना निष्कोपा, तप्यमाना तपोऽधिकम् । पालयत्यप्रमत्ता सा, सम्यक् संयममन्वहम् ॥ ८८ ॥ ( युग्मम् ) अन्येद्युः सह साध्वीभि—र्विहरन्ती क्रमात् क्षितौ । साकेतपुरमापासीत्, साध्वी सर्वाङ्गसुंदरी ॥ ८९ ॥ नंतस्य श्रीमतीकान्ति—मत्यौ तत्र प्रवर्तिनीम् । अवन्दिषातां मुदिते, साध्वीश्चान्या अपि क्रमात् ॥ ५९० ॥ स्त्रिग्धर्दोदित्यनन्वान्, स्नेहाच्च प्राच्यजन्मनः । प्रीतिः सर्वाङ्गसुन्दर्यां, विशेषाऽभूत्तयोः पुनः ॥ ९१ ॥ तयोरथ पुरो ज्ञान—निदिग्निते दर्शिनी । निर्वेदाविनी धर्म—देशनां पापनाशिनीम् ॥९२॥ तस्याः श्रृण्वतो हित्वा, मिथ्यादर्शनवासनाम् । धादर्शं दधाते, जातस्थानी च ते ॥ ९३ ॥ श्राद्धाऽनुष्ठानसूत्राणि, सम्यक् शिक्षितुमुद्यते । सर्वाङ्गसुन्दरीपार्श्वे, तत्र ते स्थितवत्यौ ॥ ९४ ॥ दासः वन्दई तुर्णं, शून्यं मुक्त्वा गृहं सुखम् । अन्येद्युरिति भर्तृभ्यां, ते पृष्टे स्पष्टमूचतुः ॥ ९५ ॥ महत्व मुनपर्वणि, तत्र सर्वाङ्गसुन्दरी । स्वामिस्तद्वन्दनार्थं, यावस्तत्राऽन्तरान्तरा ॥ ९६ ॥ किञ्चित् सर्वाङ्गसुन्दर्या,

मात्सर्यादास्तुश्च तौ । यासिष्ट तत्र मा मुग्धे, येन सा नाऽतिशोभना ॥ ९७ ॥ साभ्यूयामीति भर्तृभ्यां, वार्यमाणे पुनः पुनः ।
श्रद्धाऽऽदद्यत्लेना-चोचतां ते प्रवर्तिनीम् ॥ ९८ ॥ सर्वदा वेश्मनः शून्य-विमुक्त्या द्वारे स्थितः । मिथ्यादृष्टितया द्विष्टौ,
भगवत्यावयोः पत्नी ॥ ९९ ॥ सर्वाङ्गसुन्दरी गेहे, मेष्यतां भाणनाय तत् । आगच्छत्यावयोः सर्वः, सम्यक् श्राद्धविधिर्यथा
॥ ६०० ॥ प्रवर्तिन्या नियुक्ताथ, तयोः शिक्षयितुं विधिम् । सा सदा सदने याति, तत्पती पश्यतश्च ताम् ॥ १ ॥ आहतुस्तौ मिथे
मुग्धे, पुत्रयोर्नित्यसंस्तवः । सामान्यमठतेरस्याः, शुभोदर्को भविष्यति ॥ २ ॥ धर्मास्तित्वयात्तया शाच्य-जन्मस्नेहात्तथापि ते ।
व्यरंसिष्टां मनागस्या, न साध्व्या नित्यसंस्तवात् ॥ ३ ॥ अथान्येद्युर्निदाघार्ता, श्रीमती वासवेश्मनि । मुक्ताभालम्ब्यमुत्तार्य,
कण्ठान्मुक्ता च पार्श्वतः ॥ ४ ॥ सार्द्धं सर्वाङ्गसुन्दर्या, धर्मगोष्ठीं वितन्वती । एवमेवाऽगमत् सद्यः, कार्यैस्तुस्थ्येन कुत्रचित् ॥ ५ ॥
यत् उपवननात् सैन्य-पिशुनात् माच्यजन्माने । चदं सर्वाङ्गसुन्दर्या-स्तद् दुष्कर्मोदयात्तदा ॥ ६ ॥ भित्तेरकस्मादुत्तीर्य,
तस्याश्चित्रगतः शिखी । तयो गलिता ते हारं, गत्वा तत्रैव तस्थिवान् ॥ ७ ॥ आलोक्य तदसंभाव्यं, सा चेतसि विसिष्मिये ।
जातश्चार्याऽपरादोऽयं, पश्येति विषसाद च ॥ ८ ॥ हारोऽत्र मुक्तः क्व ममे-त्यधुना श्रीमती ह्हा । । अन्तरन्याऽप्रवेशेन, मामेव
मस्यते ध्रुवम् ॥ ९ ॥ तत्राऽसंभाव्यमेतच्चेद्, साक्षाद् दृश्यते ध्रुवे । मृषाभाषित्वमारं, तन्मे स्यादपलाञ्छनम् ॥ ६१० ॥
तथा-न्यणोधरं नास्ति, साम्प्रतं तेन साम्प्रतम् । इतो गमनमेवेति, ध्यात्वा सा निर्ययौ द्रुतम् ॥ ११ ॥ आगत्योपाश्रये नत्वा,
स्वापास्या सा प्रवर्तिनीम् । यथादृष्टं तदालेख्य-शिखिनं व्यजिज्ञपत् ॥ १२ ॥ साऽप्यूचे कर्मनुन्नस्ते, शुभः कोऽपि कुतूहली ।
विनर्केकिनमाशाया-ऽऽग्वीन्मुक्ताग्रजं शुभाम् ॥१३॥ विपादं हृदि मा कार्षी-स्तन्मुधा वा शुचं क्वचित् । यच्छुभाऽशुभयोर्हेतुः,

कर्मैव प्राच्यमङ्गिनाम् ॥ १४ ॥ ततो माध्यस्थ्यमास्थाय, दध्यौ सर्वाङ्गसुन्दरी । प्राक्कर्म किमकार्षं हा !, यस्येदृग् दुस्सहं फलम् ।
॥ १५ ॥ प्राणिनस्तानि पापानि, तन्वते हन्त हेलया । यद्विपाको विषीदद्भि-र्वेद्यतेऽसङ्ख्यजन्मसु ॥ १६ ॥ दुष्कर्म-
मलिनात्मान—स्तावदेवाऽत्र संसृतौ । नानारूपैर्विडम्ब्यन्ते, नानायोनिषु जन्तवः ॥ १७ ॥ सद्ध्यानसदनुष्ठान-पयः-
प्रक्षालितांहसः । याथातथ्येन पश्यन्ति, नात्मानं यावदात्मना ॥ १८ ॥ (युग्मम्) मैत्रीप्रमोदकारुण्य-माध्यस्थ्यस्थिरचेतसः ।
स्याज्जन्तोः परमब्रह्म-पदवी न दवीयसी ॥ १९ ॥ इति चास्तवसंवेग-रङ्गा सर्वाङ्गसुन्दरी । अवाप केवलज्ञानं, घातिकर्मक्षयाद्
द्रुतम् ॥ ६२० ॥ आसन्नः सुरवर्गोऽथ, कुर्वन् जयजयारवम् । तदागाद् दिवि दध्वानदुन्दुभिश्च मृदुस्वरम् ॥ २१ ॥ नृपा-
ऽमात्यमहेभ्याद्याः, पौराः श्रद्धालुचेतसः । तावदेवाययुस्तत्र, नन्तुं श्रोतुं च सद्वृपम् ॥ २२ ॥ इतश्च हारं श्रीमत्या,
तत्राऽनालोक्य कुत्रचित् । इतो हारो गतः क्वेति, पृष्टः परिजनोऽवदत् ॥ २३ ॥ किञ्चिन्न विद्मः किन्त्वत्र, नागात् साध्वीं विना
परः । सरोषं साऽप्यभाषिष्टा-सम्बद्धं किमु जल्पथ ? ॥ २४ ॥ रत्नेऽश्मनि मृदि स्वर्णे, तथा सुहृदि शात्रवे । यत्
समानदृशः साध्व्यः, सर्वथा तं न गृह्णते ॥ २५ ॥ सागरोऽथ समुद्रश्च, श्रीमतीपतिदेवरौ । हारं निर्गमितं ज्ञात्वा,
सहास्यावूचमारतुः ॥ २६ ॥ इयं साध्वी न साध्वीति, नाऽस्मदुक्तममन्यथाः । तत्साधु जगृहे मुक्ता—हारो मुग्धे तयाऽनया ॥ २७ ॥
साऽप्यूचे नन्वयं हन्त, कर्मयन्त्री मुधैव वाम् । हारं हि निःस्पृहाः साध्व्यो, दूरेणोज्झन्ति सर्पवत् ॥ २८ ॥ सेर्ष्यप्रेमोक्ति-
प्रत्युक्ती-रिति सर्वेऽपि ते मिथः । यावत्तन्वन्ति तत्रैव, श्रीमत्या वासवेश्मनि ॥ २९ ॥ तावत् किमेतदाश्चर्य-मिति ते हृदि
विस्मिताः । हारं चित्रमयूरास्या-न्निर्गच्छन्तं व्यलोकयन् ॥ ६३० ॥ सद्यः सागरदत्तोऽथ, तमाकृष्य तदाननात् । उपलक्ष्य

च सव्रीडः, स्वमेयस्याः समार्पिपत् ॥ ३१ ॥ ततः सर्वविदस्तस्याः, पार्श्वे सर्वेऽपि ते ययुः । अस्याऽसम्भाव्यवृत्तस्य, निदानं ज्ञातुमिच्छवः ॥ ३२ ॥ सम्यग्ज्ञानकलाज्ञात–विश्वविश्वाथ सा सती । पुरो निषेदुषां तेषां, सर्वेषां धर्ममादिशत् ॥ ३३ ॥ न दृष्टं न श्रुतं क्वापि, न चित्ते यद्विकल्पितम् । आश्चर्यभूतं तदपि, क्रियते येन हेलया ॥ ३४ ॥ भवलोच्छृङ्खलं यच्च, संसाराऽन्तः शरीरिणः । विडम्बनाभिर्विविधं, विडम्बयति नित्यशः ॥ ३५ ॥ विधिर्विधाता नियतिः, कालः प्रकृतिरीश्वरः । दैवमित्यादिपर्यायै–र्यदेवोच्यते तीर्थिकैः ॥ ३६ ॥ दुःखस्कन्धस्य सर्वस्य, भवद्भूतभविष्यतः । निदानं वर्ण्यते विज्ञै–र्यदेवाऽखिलजन्तुषु ॥३७॥ मुक्तिमार्गार्गलाप्रायं, तत्कर्मोच्छेत्तुमार्हतैः । सेव्यो धर्मः सदा ज्ञान–श्रद्धानचरणात्मकः ॥ ३८ ॥ (पञ्चभिः कुलकम्) सभासमक्षमप्राक्षीद्, देशनान्तेऽथ सागरः । भगवत्यालेख्यशिखी, मुक्ताहारं गलेत् किमु ? ॥३९॥ साऽप्यवोचत् गलेत् किन्तु, कर्मनुन्नसुराश्रयात् । यथा गवाक्षे पुरुष–स्त्वत्प्रत्यक्षं तदाऽवदत् ॥ ६४० ॥ सागरः पुनरप्राक्षीत्, प्राक्सङ्केतोक्तिविस्मितः । तत् किं कर्म कथं केन, कृतमित्यवदत्तु सा ॥ ४१ ॥ प्राग्जन्मनि मया च्छद्म–वाक्यमौच्यत यद् द्विषः । समभूत् कर्मणस्तस्य, विपाकोऽप्यत्र मे द्विषः ॥ ४२ ॥ बहूनां प्रतिबोधाय, विस्तरेणाथ साऽवदत् । याथातथ्येन पाश्चात्य–भववृत्तं तदादितः ॥ ४३ ॥ चत्वारोऽपीत्यमाकर्ण्य, मुखात् सर्वविदोऽथ ते । प्राग्भवाऽनुभवं सर्वं, ह्योदृष्टमिव सस्मरुः ॥ ४४ ॥ हृदि व्यभावयंश्चात्र, भवं प्राप्य शुभाऽशुभम् । तदेकचित्ता न विदु–र्जीवाः पूर्वं परं च तम् ॥ ४५ ॥ जीवा मात्रादिसम्बन्धा–दपि स्नेहार्द्रचेतसः । अन्यान्यरूपताप्राप्ता, मिथोऽपि न विदन्ति ही ! ॥ ४६ ॥ तेषु सागरदत्तोऽथ, व्यषीदत् सुतरां हृदि । स साध्व्यां यदसद्दोष–माशङ्किष्ट तदा तदा ॥ ४७ ॥

रागद्वेषमुचस्तस्या, निपत्य पद्योः पुनः । व्रीडाविलक्षः क्षमया—मासिवांस्तां निजाऽज्ञताम् ॥ ४८ ॥ पुनर्विभाव्य संसार—मसारं विरसं हृदि । मत्यपद्यन्त चारित्रं, चत्वारोऽपि सहैव ते ॥ ४९ ॥ हृदि सर्वविदः शिक्षा—मक्षामां दधतोऽथ ते । साधुधर्मं त्रिधा शुद्धं, चिरकालमपालयन् ॥ ६५० ॥ तपोध्यानक्रियोद्योग—क्षालिताऽशेषकल्मषाः । समयेऽथ समासाद्य, सर्वसंविदमुज्ज्वलाम् ॥ ५१ ॥ क्षीणनिःशेषकर्माणः, स्वायुपूर्तौ क्रमेण ते । जातसर्वार्थसंसिद्धेः, सिद्धेरातिथ्यमाप्नुवन् ॥ ५२ ॥ (युग्मम्) ईषत् मजावतीपीडा—हेतुत्वेनान्यजन्मनि । वाक्यमात्रमभूदीदृग्, दुर्विपाकं धनश्रियः ॥५३॥ ततो मनोवचःकायै—र्न कुर्यान्नापि कारयेत् । कुर्वन्तं वानुमन्येत, नान्यपीडां कचित् सुधीः ॥ ५४ ॥ इति वाचंयमाधीश—वाचं श्रुतिसुधामुचम् । श्रुत्वा हृदि भृशं बिभ्य—द्विपाकात् पापकर्मणाम् ॥ ५५ ॥ सद्यो दुरन्तसंसार—कारागारविमुक्तधीः । आसेधाभङ्गवैराग्यं, देवदिन्नः मियासखः ॥ ५६ ॥ कुटुम्बभारमारोप्य, सर्वं ज्येष्ठाङ्गजन्मनि । प्रव्रज्यामग्रहीत् कृत्वा, चैत्येष्वष्टाह्निकामहम् ॥ ५७ ॥ (त्रिभिर्विशेषकम्) अन्येऽपि बहवस्तत्र, दुःखदुर्गतिभीरवः । साधुश्राद्धद्वयं सम्यग्, यथार्हं प्रतिपेदिरे ॥ ५८ ॥ सम्यक्चारित्रमाचर्य, स्वर्लोकमयापतुः । देवदिन्नसरस्वत्यौ, क्रमाच्च शिवमाप्स्यतः ॥ ५९ ॥ तीव्रमोहोदयादेवं, मियङ्गुरपतङ्गवे । मोहमुक्त्या च संसार—मुत्तीर्णः समियः सुतः ॥ ६६० ॥ तदैश्वर्यप्रियापत्य—पञ्चेन्द्रियसुखादिषु । वत्सा व्यामोहमुत्सृज्य, मनो धर्मे निधीयताम् ॥ ६६१ ॥ इति श्रीतपागच्छाधिराजश्रीसोमसुन्दरसूरिपट्टप्रभाकरश्रीमुनिसुन्दरसूरिविनेयवाचनाचार्य—सोममण्डनगणिकृतायां श्रीयुगादि-देशनायां द्वितीय उल्लासः ॥

---

# अथ तृतीयोल्लासः ॥

निधत्ते नरकोच्छेदि, स्फुरद्धामसुदर्शनम् । सदाशये यः श्रीकान्तः, स युगादिजिनः श्रिये ॥ १ ॥ इतश्चाऽवसरे तस्मिन्, कुमारः केवलाह्वयः । प्रणम्य त्रिजगन्नाथं, विनयेन व्यजिज्ञपत् ॥ २ ॥ मुक्तिं मोहोज्झनादेव, स्वामिन्नादिष्टवान् भवान् । मोहाङ्गवर्जनादेव, भवेन्मोहोज्झनं पुनः ॥ ३ ॥ मोहाङ्गं प्रथमं चात्र, लक्ष्मीरेव स्मृता बुधैः । या हि मोहनवल्लीव, व्यामोहयति मानवम् ॥ ४ ॥ पुनराख्यत् प्रभुः पुत्र-हिताय विहितादरः । ऐहिकामुष्मिकानर्थ-निबन्धनमियं रमा ॥ ५ ॥ चतुरङ्गचमूः रम्या, सर्वेन्द्रियसुखावहा । त्रिवर्गसाधनं सा तु, लक्ष्मीर्मोक्तुं न शक्यते ॥ ६ ॥ तथाहि प्रथमं तावत्, क्लेशेनोपार्ज्यते रमा । अर्जिताऽप्युपघातेभ्यो, लोकैर्दुःखेन रक्ष्यते ॥ ७ ॥ यदुक्तम्—अर्थानामर्जने दुःख-मर्जितानां च रक्षणे । आये दुःखं व्यये दुःखं, धिगर्था दुःखभाजनम् ॥ ८ ॥ सौम्या ! निशम्यतामत्र, रत्नाकरः प्रथितो धनी । अर्थाऽर्जनव्ययस्पष्ट-दृष्टकष्टो निदर्शनम् ॥ ९ ॥ तथाहि—रत्नाकर इति विख्यातः, श्रेष्ठी सूर्यपुरेऽभवत् । पत्नी प्रीतिमती तस्य, तनयश्च सुमङ्गलः ॥ १० ॥ विधाय विविधा नीर-स्थलयात्राः स तृष्णाहृत् । क्षुत्तृट्शीतातपक्लेशान्, सहित्वा बहुशः स्वयम् ॥ ११ ॥ छन्दोऽनुवर्ति-

साध्यानां, कृत्वा सेवां महीभुजाम् । सदम्भारम्भसंरम्भान्, व्यापारांश्चाऽप्यनेकशः ॥ १२ ॥ कूटक्रयाद्यैर्वाणिज्यै-
र्धनंचहृत्य चिरं कुधीः । गृहव्ययं च संक्षिप्या-मेलयत् स धनं बहु ॥ १३ ॥ ( त्रिभिर्विशेषकम् ) मेलितस्याथ
वित्तस्य, रक्षोपायविधानधीः । अन्येद्युः सुतमाहूय, स चतुष्कर्णमूचिवान् ॥ १४ ॥ नृपतस्करदायाद-पिशुनाः
मत्कं धनम् । लोभाद्दातुमीहन्ते, भूक्षिप्तमिति तद्धरम् ॥ १५ ॥ इत्यालोच्य सुतेनाऽमा, श्मशानभुवि
सोऽगमत् । कलशं स्वर्णसंपूर्णं, समादाय महानिशि ॥ १६ ॥ अथैको हारिताऽनल्प-वित्तोऽशक्तस्तदर्पणे ।
द्यूतकृद् द्यूतकारेभ्यो, नष्टः माक् तत्र विद्यते ॥ १७ ॥ पतौ चैतद्धनं यावत्, क्षितौ निक्षिप्य यास्यतः ।
मीलितं साधयेऽचैतद्, करिष्ये नूनमात्मसात् ॥ १८ ॥ इति हृष्टमनाः स्थानं, रहोवृत्त्या विलोकते । लोभाभिभूतः पतित-
स्तत्राऽनाथशवे च सः ॥ १९ ॥ पक्वबुद्धिरथ श्रेष्ठी, निदधत्तजगौ सुतम् । कश्चिद्विलोकयन्मा भू-दिति वीक्षस्व सर्वतः ॥ २० ॥
स धूर्तोऽपि तदाकर्ण्य, तत्राऽनाथशवान्तरे । तद्वदेव निपत्याऽस्था-न्निश्चेष्टो धनलिप्सया ॥ २१ ॥ पित्रादिष्टः
सुतोऽप्येत्य, सर्वत्राऽपि विलोक्य च । पितरं प्राह नास्त्यत्र, कश्चिदन्यः शवान् विना ॥ २२ ॥ भासि-
तास्ते च सर्वेऽपि, शृगालाद्यैः क्वचित् क्वचित् । अक्षताङ्गस्तु तेष्वेकः, स सघस्रकतया पितः ! ॥ २३ ॥
तदारुण्यच्छङ्कितः श्रेष्ठी, श्मशाने निशि निर्जने । शवः कथमियद्वेल-मक्षताङ्गो हि तिष्ठति ? ॥ २४ ॥ धूर्ताः केचित् पुनर्वत्स !,
परद्रव्याभिलाषिणः । दम्भेनापि म्रियन्ते तद्, मा भूद् दम्भमृतो हि सः ॥ २५ ॥ अक्षताङ्गस्य तत्तस्य, कर्णौ छित्वाऽऽनय
द्रुतम् । स चेद् दम्भमृतो भावी, न सोढा तदियद्व्यथाम् ॥ २६ ॥ अथ दध्यौ स धूर्तोऽपि, ममैष च्छेत्स्यति श्रुती । तथापि न

चालिष्यामि, श्रुतिभ्यां यद् वरं धनम् ॥ २७ ॥ अकर्णोऽपि धनैर्युक्तः, सर्वत्राऽऽद्रियते जनैः । तन्मुक्तस्तु सकर्णोऽपि, न यत्स्यचन कर्मणि ॥ २८ ॥ सुतोऽर्थस्य श्रुती तस्य, च्छित्त्वा स्वपितुरार्पिपत् । नत्वीषदपि पस्पन्दे, धनलुब्धः स दाम्भिकः ॥ २९ ॥ पितापि रुधिरार्द्रे ते, व्यालोक्य चकितो हृदि । सुतमूचे भवेद् वत्स !, शवे जातु न शोणितम् ॥ ३० ॥ तद्विमृश्यापिदं किञ्चिद्, प्राणच्छेदं विना ततः । अयं धूर्त्तः शवो वेति, शङ्का याति न मे हृदः ॥ ३१ ॥ समत्सरं सुतोऽप्यूचे, तावत् त्वदुपरोधतः । कृतमीदृगसत्कर्म्म, कुलाऽर्हं मया ध्रुवम् ॥ ३२ ॥ नाऽभूत्तत्र तथाप्यत्र, प्रतीतिर्मृतजीविते । तत् किं न वेत्सि यज्जीवन्, सहेत्कश्चयितत्कथम् ? ॥ ३३ ॥ किञ्च-इत्थं यतस्तातो भीतिं, शङ्कमानः पदे पदे । लोके न लज्जसे तात !, धृष्टो हृदयदुर्बलः ॥ ३४ ॥ पिताप्युवाच वत्साऽन्य-द्रोहैकमनसां नृणाम् । दुस्सहं दुष्करं चापि, न किञ्चिदपि विद्यते ॥ ३५ ॥ आस्तां कर्णच्छिदाकष्टं, परत्रां च पराभियम् । केचिच्छिरःपणेनापि, स्पृहयन्ति नराधमाः ॥ ३६ ॥ त्रस्यन्ति त्रिदशा अपि । धूर्त्तेभ्यो बिभ्यतां तेभ्यः, काऽत्र व्रीडा च मादृशाम् ॥ ३७ ॥ दिव्यशक्तिजुषो येभ्य- मधुरिपुर्गाढमाश्लिष्य लक्ष्मी-मध्यास्ते वित्तनाथो निधिनिवहमुपादाय कैलासशैलम् । शक्रः कल्पद्रुमादीन् कनकशिखरिणो- ऽधित्यकासु न्यधासीत्, धूर्त्तेभ्यस्त्रासमित्थं दधति दिविषदो मानवाः के वराकाः ! ॥ ३८ ॥ यदुक्तम्—वत्सङ्के सिन्धुभर्तुर्भवति तस्य न स्याद्वाययोः । जात्वर्थविगमेऽप्येव-मविमृश्यार्थकारिता ॥ ३९ ॥ तद् गच्छ नासिकां छिन्धि, वक्ष्यामि नागलच्छेदात्, पश्येतद्धनाशया ॥ ४० ॥ दध्यौ धूर्त्तोऽपि यत्किञ्चित्, करोत्येष करोतु तत् । त्वरितं सुतः ॥ ४१ ॥ अथैवं पितृवाग्नुन्नः, समत्सरमना मनाक् । तस्य प्राणमपि छित्त्वा, तत्रागात् श्रेष्ठी व्यपगताशङ्कः, सुतेन सहितस्ततः । वसुधायां निधायात्म-धनं मन्दिरमाययौ ॥ ४२ ॥

तावत् पीनोद्यमः श्रोत्र-घ्राणहीनोऽप्यदीनहृत् । स द्राक् तन्निगृहीतात्म-दौस्थ्यः सर्वं गृहीतवान् ॥ ४३ ॥ द्यूतादिव्यसनी सोऽपि, निःशङ्कः श्रेष्ठिनः श्रियम् । ततो विलसति स्वैरं, त्यागभोगैरनुत्तरैः ॥ ४४ ॥ स्वायत्तानां परश्रीणां, परस्त्रीणां च मूलतः । यद् भवेयुर्विलासेषु, तादृशाः कुशला भृशम् ॥ ४५ ॥ चरन्तं लीलया लून-श्रवणघ्राणमन्यदा । श्रेष्ठ्यथा-र्थितमर्थिभ्यो, ददतं स ददर्श तम् ॥ ४६ ॥ तं वीक्ष्य विस्मयस्मेर-मनाः स श्रेष्ठी दध्यिवान् । समृद्धिरीदृगास्यस्य, कुतोऽस्याऽभवदीदृशी ? ॥ ४७ ॥ धूर्तोऽयं जातु मा हार्षी-त्तन्निधानधनं मम । इति शङ्काकुलः सद्य-स्तत्र सोऽगात्तदीक्षितुम् ॥ ४८ ॥ अनवेक्ष्य च तत्तत्र, वज्रेणेवाहतः क्षणम् । दुःखार्त्तो न्यपतद् भूमौ, मूर्च्छामीलितलोचनः ॥ ४९ ॥ क्षणाच्च लब्धचैतन्यः, शीतलैर्वनवायुभिः । पश्चात्तापाऽमितस्वान्तः, सोऽध्यासीद् विलपन् भुवि ॥ ५० ॥ प्राणेभ्योऽप्यधिकं नैक-कष्टाप्तं हरता धनम् । लूनश्रोत्रनसा तेन, धूर्तेनाहं हतो हहा ! ॥ ५१ ॥ दम्भान्मृतः स धूर्तो मे, नाज्ञातश्चाभवन्मनाक् । पुनस्तु ममुनीऽमंस्त, चेदुक्तं तत्करोमि किम् ? ॥ ५२ ॥ दोषो वा नाऽस्य किन्त्वासी-दत्राऽज्ञाने ममैव हा । यच्छ्रुतिघ्राणवत्तस्य, तदा नाऽच्छिन्दं शिरः ॥ ५३ ॥ सा वा संपद्यते बुद्धिः, सा मतिः सा च भावना । तादृशाश्च सहायाः स्यु-र्यादृशी भवितव्यता ॥ ५४ ॥ यन्नाव्यं तद् बभूवाथ, परमद्यापि भूभुजे । निवेद्यैतद् ग्रहीतारं, गतं प्रत्याहरामि तत् ॥ ५५ ॥ इत्यालोच्य हृदि श्रेष्ठी, तर्जयन् पुरुषं रुषा । आनैषीन्निर्विकारास्यं, तं नृपास्थानसंसदम् ॥ ५६ ॥ आख्यत् पुनः प्रजापालं, दुष्टनिग्रहणोद्यतम् । आददे विपुलं वित्तं, मम दुष्टात्मनाऽमुना ॥ ५७ ॥ नृपस्तदा तमप्राक्षीद्, वक्ति रे किमयं वणिक् ? । सोऽप्यूचे सत्यमेवेदं, परं वक्तव्यमत्र किम् ? ॥ ५८ ॥ मिथश्चित्तानुकूल्येन, यदत्र व्यवहारिभिः । व्यवहारेण गृह्यन्ते,

धनकोटयोऽपि निस्वशः ॥ ५९ ॥ चित्तानुकूल्याज्ञातायां, सम्यग्व्यवहृतौ मिथः । कालान्तरेऽन्यथा वक्तु-र्निषेद्धा च महाजनः ॥ ६० ॥ स्वमस्य व्यवहारेण, मयाप्यात्तं तथा विभो ! । तत् किं संमत्यसौ लोभा-भिभूतः कलहायते ? ॥ ६१ ॥ रोपशुष्यन्मुखः श्रेष्ठी, तदोवाच मलिम्लुचम् । स्तैन्येनादाय मद्वित्तं, न्यगादीर्मूढ ! मा मृषा ॥ ६२ ॥ धूर्तोऽप्युवाच विसर्पी-र्मा श्रेष्ठिन्नात्मवस्तुनः । वित्तं विनिमयेनैव, मयात्तं न पुनर्मुधा ॥ ६३ ॥ स तदा वृश्चिकस्पृष्ट-कपिवत् काममुच्छलन् । कोपकम्पवपुः श्रेष्ठी, साधिक्षेपमुवाच तम् ॥ ६४ ॥ रे धृष्ट ! स्पष्टमाख्याहि, किं मे विनिमयेऽर्पितम् ? । दुग्धाऽम्भोव्यक्तिरधुना, यद् भवेन्नृपपर्षदि ॥ ६५ ॥ धूर्तोऽप्युवाच किं श्रेष्ठि-स्तत् संमतेव विस्मृतम् ? । तदा विनिमयेन त्वं मे, श्रुतिघ्राणं त्वमग्रहीः ॥ ६६ ॥ श्रेष्ठिन् ! विनिमयश्चायं, विचारेऽद्यापि नेव चेत् । तद् गृहाण निजं वित्तं, श्रुतिघ्राणं समर्प्य मे ॥ ६७ ॥ नृपामात्यादिभिः पृष्टः, किमेतदिति विस्मितैः । सोऽथ तद्वृत्तमखिलं, यथाजातमचीकथत् ॥ ६८ ॥ प्रत्ययार्थं च सर्वेषां, सोऽपनीय स्वमौलिकम् । अदीदृशच्छिरस्तुम्बी-फलवत् सर्वतः सदृक् ॥ ६९ ॥ दृशा चक्रे किमस्येदृग्, वराकस्य निरागसः । भर्त्सुतैवमुपालभ्य, रुद्धः श्रेष्ठी स भूभुजा ॥ ७० ॥ चिच्छेदैकः श्रुतिघ्राणं, वित्तं चाऽपाहरत् परः । तद् द्वयोः समतैवाऽत्रे-त्युक्त्वाऽमात्यैश्च मोचितः ॥ ७१ ॥ भूत्वा गतेन सोऽथाऽभूद् धनेनातीव दुःखितः । जन्मान्ध्यादपि सच्चक्षु-र्नाशदुःखं हि दुस्सहम् ॥ ७२ ॥ अर्थस्याये व्यये चैवं, गुर्वभूद् दुःखमस्य यत् । अर्थानामर्जने दुःख-मित्यादीत्युच्यते बुधैः ॥ ७३ ॥ अथ प्रस्तुतम्-कुलं शीलं च वैदुष्य-माचारं लक्षणं बलम् । पुण्यं चाऽपि नृणां लक्ष्मी-र्यान्त्यायान्ती च नेक्ष्यते ॥ ७४ ॥ सन्ध्याकालाऽभ्ररेखेव, खल-

मीतिरिनाधना । केषाञ्चित् पश्यतामेव, सद्यो विघटते रमा ॥ ७५ ॥ जन्तुघातमृषोक्त्यादि–महाकल्मषकारिणम् ।
म्लेच्छमप्याश्रयाति श्री–र्मद्यमांसादिसेविनम् ॥ ७६ ॥ षड्विभावश्यकोद्युक्तं, शुद्धन्यायपथाऽध्वगम् । कुलीनं सद्गुणोत्कृष्ट
मपि त्यजति दूरतः ॥ ७७ ॥ इमामपि रमामाप्य, मद्यपा इव केचन । चलन्ति ऋजुपादैर्नो, स्खलन्ति च समे पथि
॥ ७८ ॥ भक्तदेषो जडमीति–स्तृष्णास्यफलुता तथा । ज्वारिणामिव जायन्ते, लक्ष्मीसाकृतत्यमीयुषाम् ॥ ७९ ॥
मलिनीक्रियते गुणो, मनोऽम्बकमपि श्रिया । प्रासादोऽन्तर्यथा धूम–लेखयेव शुभोज्ज्वलः ॥ ८० ॥ तथाऽतिशायिनी लक्ष्मी–
भैर्प्राग्यनिबन्धना । राज्ये पुनः सुदुष्पूरे, यत्ताः पातालरन्ध्रवत् ॥ ८१ ॥ वेश्याहृदयवद्राज्यं, सर्वथाप्यर्थवल्लभम् ।
सौहार्दं दुर्जनस्येवा–ऽवसाने विरसं ध्रुवं ॥ ८२ ॥ अप्रमत्ततया चिन्त्यं, सदा सर्पकरण्डवत् । नियन्त्रणीयं कपिवद् गुणैः
शालामार्ग गजन् ॥ ८३ ॥ फलितक्षेत्रवन्नित्यं, रक्षणीयं सुयत्नतः । दारुणं परिणामे च, कुपथ्यस्येव भोजनम् ॥ ८४ ॥
( त्रिभिर्विशेषकम् ) तथा प्रायोऽप्र मर्त्यानां, यौवनोन्मत्तचेतसाम् । सर्वापि श्रीर्विकाराय, राज्यश्रीस्तु विशेषतः ॥ ८५ ॥
राज्यश्रीसंप्रयुन्मपा, जात्यन्धा इव भूभुजः । पुरस्थमपि नेक्ष्यन्ते, जनं दिव्यदृशोऽपि हि ॥ ८६ ॥ तथा बधिरवद् भूपाः,
सगुणश्रवणा अपि । पार्श्वस्थानामपि प्रायो, वाक्यमाकर्णयन्ति न ॥ ८७ ॥ जनैः खलपराभूतै–र्विज्ञप्ताः स्वार्थसिद्धये ।
मूका इव सवाचोऽपि, नृपा नैव वदन्त्यपि ॥ ८८ ॥ राज्यलक्ष्मीमदोन्मत्ता, गजा इव निरङ्कुशाः । संतापितप्रजाधर्मा–
रामद्रुमभञ्जने ॥ ८९ ॥ स्तुताश्च चाटुवचनै–र्धनान्धैरनुजीविभिः । आत्मानं यत मन्यन्ते, देवेभ्योऽप्यधिकं नृपाः ॥ ९० ॥
गुणानपि नमो देवान्, मुनीन् स्वजनबान्धवान् । पितरौ चापि गर्वेण, न नमन्ति नराधिपाः ॥ ९१ ॥ असुन्दरमपि स्वोक्तं,

स्थापयन्त्यतिसुन्दरम्। परैः सुन्दरमप्युक्तं, भूपाः पुनरसुन्दरम् ॥ ९२ ॥ तमेव बहु मन्यन्ते, तस्यैव च वचो हितम्। सुहृत्त्वे सेवकत्वे वा, तमेव स्थापयन्ति च ॥ ९३ ॥ नृपास्तमेव शंसन्ति, तस्यैव ददते धनम्। मन्त्रयन्ति च तेनैव, समं गोष्ठीं च कुर्वते ॥ ९४ ॥ यस्तेषामञ्जलिं कुर्यात्, स्तवं वाक्यैश्च चाटुभिः। वचो युक्तमयुक्तं वा, तथेत्यङ्गीकरोति च ॥ ९५ ॥ (त्रिभिर्विशेषकम्) छन्दं राज्ञां च यश्चाटु-ग्राहाणां नाऽनुवर्तते। गुणी सुधीः कुलीनोऽपि, स तैर्नाद्रियते क्वचित् ॥ ९६ ॥ प्रतिबन्धस्ततो वत्साः, सदोपायामिति श्रियाम्। अबुधानां भवेत् मायो, बुधानां तु न सङ्गतः ॥ ९७ ॥ वयस्यौ शुचिवोद्रश्च, श्रीदेवो वणिजौ यतः। श्रियाऽनया गुरूकृत्य, तूलादपि लघूकृतौ ॥९८॥ तथाहि—नाम्ना भोगपुरेऽभूतां, नगरे वणिजावुभौ। श्रीदेवः शुचिवोद्रश्च, श्रीमन्तौ जनकश्रिया ॥ ९९ ॥ शुचिवोद्रवणिक् तत्र, शौचाचारकदाग्रही। याति सर्वत्र हस्तात्त-सपयस्ताम्रभाजनः ॥ १०० ॥ द्वारमागत्य मातङ्गैः, शुचिवोद्राभियाऽन्यदा। क्वास्ते त्वत्पतिरित्युक्ता, मध्येऽस्तीति जगाद तान् ॥ १ ॥ दीनाराः शुचिवोद्रस्य, पितुरेते ततोऽधुना। इमानर्पय मध्ये त्व-मित्युक्ते तैश्च साऽग्रहीत् ॥ २ ॥ तांश्च नीत्वा गृहस्यान्तः, शुचिवोद्रस्य सार्पिपत्। क्षिप्तामीषु चक्षेत्युक्ता, तेन साऽपि न हीत्यवक् ॥ ३ ॥ सर्वत्राऽच्छुप्तिभवना—त्तदा खिन्नमना भृशम्। एभिर्मे सद्म दीनारैः, सर्वं हा मलिनीकृतम् ॥ ४ ॥ तदेषां स्पर्शनाद् भ्राष्टि-रिति जल्पन् रुषाऽरुणः। आक्षिपत् शुचिवोद्रस्तान्, वामपादेन दूरतः ॥५॥ (युग्मम्) शुचिवोद्रकृताऽवज्ञा, सञ्जातगुरुमत्सरा। मोक्तुमिच्छुर्गृहं तस्य, लक्ष्मीरेवमचिन्तयत् ॥ ६ ॥ अटवीमपि लङ्घन्ते, तरन्त्यपि महार्णवम्। आरोहन्त्यचलस्याग्रं, विवरं प्रविशन्ति च ॥ ७ ॥ मामाप्तुमिच्छवो लोकाः, सहन्ते वाऽपराण्यपि। क्षुत्तृट्शीतातपादीनि, महाकष्टानि भूरिशः ॥ ८ ॥ तथापि स्यां न वा तेषां, प्राच्यकर्मानुभावतः।

चतुर्णामपि वर्णानां, मान्यां तामपि मामिति ॥ ९ ॥ आसङ्गेन विनष्टोऽयं, शौचाचारकदाग्रहात् । पश्चात् क्षिपति पादेनागच्छन्तीं स्वयमेऽकासि ॥ ११० ॥ ( चतुर्भिः कलापकम् ) अत्यासङ्गात् विनष्टोऽयं, शुचिवोद्रस्तथा मया । वाढं विडम्बनीयस्त्रिवर्णीकृत्य संप्रति ॥ ११ ॥ शौचाचारं विमोच्याशु, मामवाप्तुं पुनर्यथा । चिरं वहति दीनात्मा, मातङ्गस्याप्युपानहौ ॥ १२ ॥ इत्यालोच्य द्रुपोपाशु, कमला तन्निकेतनम् । इन्द्रजालमिवाऽनेशद्, धनं सर्वं तदैव च ॥ १३ ॥ यतः—लक्ष्मीः शनैः शनैरेति, निर्याति युगपत् पुनः । पद्मया पलैर्जलैः पूर्णा, रिच्यते यद् घटी क्षणात् ॥ १४ ॥ निर्धनत्वाच्च सर्वत्र, सुहृत्स्वजनबन्धुषु । अनादरपदं जज्ञे, शुचिवोद्रः शनैः शनैः ॥ १५ ॥ यस्यार्थस्तस्य मित्राणि, यस्यार्थस्तस्य बान्धवाः । यस्यार्थः स्वजनाश्चापि, तस्य स्युर्बहवो जनाः ॥ १६ ॥ स्वस्वार्थरसिका नित्यं, सुहृत्स्वजनबान्धवाः । लक्ष्मीवन्तं निषेवन्ते, फलितद्रुमिवाऽण्डजाः ॥ १७ ॥ निःस्वोऽयमसौ किञ्चिन्-मा याचिष्टेति बिभ्यतः । त एवोज्झन्ति दूरेण, दग्धाऽरण्यं मृगा इव ॥ १८ ॥ यत्रैव भुक्तवान् भोगान्, वाञ्छितोपनतैर्धनैः । दुःस्थीभूतश्च तत्रैव, दह्यतेऽभिभवाग्निना ॥ १९ ॥ निष्फलव्यवसायत्वात्, पुरे तत्र शनैः शनैः । निर्वहत्यपि नैवाऽयं, ततो देशान्तरेऽचलत् ॥ १२० ॥ भ्रमन्नपि स सर्वत्र, ग्रामाकरपुरादिषु । न किञ्चित् क्वचिदप्याप, प्राक्कर्म सहचारि यत् ॥ २१ ॥ निराशः शुचिवोद्रस्तद्, धवले स्वपुरं प्रति । निर्विश्रामं वहन् सायं, पुरोद्यानमवाप च ॥ २२ ॥ दीर्घाध्वातिक्रमे श्रान्तः, क्षुत्तृड्चिन्ताभरार्दितः । यक्षस्याऽऽडम्बराख्यस्य, गृहे तत्र स तस्थिवान् ॥ २३ ॥ तावदागत्य तत्रैको, मातङ्गो यक्षमादरात् । प्रणम्य पूजयित्वा च, निविष्टो द्वारमण्डपे ॥ २४ ॥ तत्राऽचोल्लिखिता तेन, यक्षिणी पूजिता तथा । मन्त्रश्च तत्पुरो जप्तो, यक्षिण्याविरभूत्ततः ॥ २५ ॥ मातङ्गेनाथ सा प्रोक्ता, मम स्वामिनि !

संपदि। संपद्यमानसर्वेष्टं, विलासभवनं कुरु ॥ २६ ॥ तत्क्षणादेव यक्षिण्या, विलासभवने कृते । इच्छोपनतसर्वेष्टः, सुहृत्स्वजनसङ्गतः
॥२७॥ विललास स मातङ्गः, पञ्चेन्द्रियसुखं चिरम्। कृतकृत्यश्च तत्सर्वं, विससर्जेन्द्रजालवत् ॥२८॥ (युग्मम्) मातङ्गस्येतिमाहात्म्यं,
वीक्ष्य विस्मितमानसः । तमेव सेवितुं लग्नः, शुचिवोद्रो धनाशया ॥ २९ ॥ स नमत्यासनं दत्ते, तस्योत्तिष्ठति सम्मुखः ।
वहत्युपानहौ तस्य, पादौ मृद्नाति चान्वहम् ॥ १३० ॥ तमेव सेवमानस्य, सर्वः शौचकदाग्रहः । अनेशत् शुचिवोद्रस्य,
तृष्णातरलितात्मनः ॥ ३१ ॥ आराध्य शुचिवोद्रेण, तथा सुचिरसेवया । सोऽवग् भद्र ! ममाऽयुक्तो—पचारं कुरुषे किमु ?
॥ ३२ ॥ शुचिवोद्रोऽप्यवक् स्वामिन्!, शृणु दीनदयापरः । धनाय न्यभ्रमं भूरि–भुवं दारिद्र्यविद्रुतः ॥ ३३ ॥ परं
स्वाप्याशयानाहं, काणामपि कपर्दिकाम् । प्रस्थितोऽहं निराशः सन्, स्वदेशाभिमुखं ततः ॥ ३४ ॥ तत्र देवकुले वीक्ष्या–ऽनुभवं ते
महत्तरम् । पृष्ठस्थः सेवितुं लग्नो, धनाशापाशयन्त्रितः ॥ ३५ ॥ तत्तारय प्रसद्याऽस्मान्मां दारिद्र्यमहार्णवात्। इत्युक्ते शुचिवोद्रेण,
मातङ्गोऽपि जगाविति ॥ ३६ ॥ गृह्णातु साधनोपाय–युक्तां विद्यामिमां भवान् । महाप्रसाद इत्युक्त्वा, सोऽपि जग्राह तां मुदा
॥ ३७ ॥ कृतार्थं मन्यमानः स्वं, ततोऽसौ स्वगृहं गतः । सर्वसाधनसामग्री–पूर्वं मण्डलमालिखत् ॥ ३८ ॥ आलिख्य यक्षिणीं
तत्र, पूजयित्वा च यावता । मन्त्रं स्मरति तावद्धि, विस्मृतं तस्य तत्पदम् ॥ ३९ ॥ मन्त्रभ्रष्टरूपितत्, स विलक्षाननस्ततः ।
मातङ्गस्योकसान् गत्वा, स्वं स्वरूपं यथास्थितम् ॥ १४० ॥ मातङ्गोऽप्याह मन्त्राऽमुं, पठं विद्याभिमन्त्रितम् । गृह्णीष्वेष्टप्रदो भावी,
पूजितो पदसारापि ॥ ४१ ॥ ततः प्रणम्य मातङ्गं, पटं लात्वा च गच्छतः । स्वपुरं शुचिवोद्रस्य, तस्करैर्जगृहे पटः ॥ ४२ ॥ तत
एव वलित्वाऽसौ, विच्छायवदनः पुनः । मातङ्गोपान्तमागत्य, पटव्यतिकरं जगौ ॥४३॥ मातङ्गः शुचिवोद्राय, पुनरप्यनुकम्पया।

दत्वाऽन् निधिमालयायं, घटं विद्याभिमन्त्रितम् ॥ ४४ ॥ नत्वा मातङ्गमादाय, घटं स्वगृहमागतः । ययाचे शुचिवोद्रस्तं, पूजयित्वा
यथाविधि ॥ ४५ ॥ यथेप्सितं ततः कुम्भात्, प्राप्याऽसौ सुहृदोऽखिलान् । सादरं भोजयामास, बुभुजे च यथारुचि ॥ ४६ ॥
अहो कुम्भानुभावात्मे, दारिद्र्यं दूरतो गतम् । इति प्रमुदितो मूर्ध्नि, कुम्भं कृत्वा ननर्त सः ॥ ४७ ॥
हर्षातिरेकचित्तस्य, तस्यैवं नृत्यतः सतः । अभाग्येनाऽपतन्मूर्ध्नः, कुम्भोऽभूच्चाशु खण्डशः ॥ ४८ ॥
शुचिवोद्रो घटे तस्मिन्, भग्ने दूनमना भृशम् । पुनर्जगाम मातङ्ग–पार्श्वे सोऽपि बभाण च ॥ ४९ ॥
इयत्येवाऽभवद्विद्या, मम नास्त्यधिका पुनः । नागन्तव्यं तथा भद्र !, मत्समीपे पुनस्त्वया ॥ १५० ॥ मातङ्गेनेत्थमुक्त्वाऽसौ,
निरस्तः स्वगृहं ययौ । आर्त्तध्यानपरो रात्रौ, सुप्तवांश्च स दुःखितः ॥ ५१ ॥ स दृष्ट्वा मध्यवयसं, प्रमदां श्वेतवाससम् ।
अभ्युत्थाय प्रणम्याऽऽख्यत्, का त्वं स्वामिनि ! साऽप्यवक् ॥ ५२ ॥ या पादेन त्वया क्षिप्ता, साऽहं लक्ष्मीस्त्वदोकसः ।
शुचिवोद्रोऽवदन्मातः !, क्व गताऽभूरियच्चिरम् ? ॥५३॥ उवाच श्रीरियत्काल–मगां मातङ्गसद्मनि । को मातङ्गः स इत्युक्ते, शुचि-
वोद्रेण साऽलपत् ॥ ५४ ॥ बहुधानही यस्य, पृष्ठस्थो धनकाम्यया । शुचिवोद्रः सृजन् सेवां, सुचिरं दुःखमन्वभूत् ॥ ५५ ॥
नगरे शुचिवोद्रेण, किमर्थं तद्विहायसः ? तव शौचावलोकाय–त्युक्त्वा श्रीर्द्राक् तिरोहिता ! ॥ ५६ ॥ शौचेनाऽधात्तमुक्तेन,
लज्जाऽवनतकन्धरः । शुचिवोद्रः स सर्वत्र, हास्यास्पदमजायत ॥ ५७ ॥ शुचिवोद्रः श्रिया त्यक्तः, पश्चात्तापाग्निनाऽज्वलत् ।
जीवितव्यादपि प्राण–त्ययाप्यासीत् दुःखितः ॥ ५८ ॥ तावेवाथ श्रियं तस्मात्, श्रीदेवोऽमंस्त देवताम् । त्यागभोग-
महत्त्वादि–फला साक्षादिहैव या ॥ ५९ ॥ रोपतोपफलं येषां, प्रत्यक्षं नाऽत्र वीक्ष्यते । अजागलस्तनप्रायैः, किमु

तैर्दैवतान्तरैः ॥ १६० ॥ इति देवान्तराण्येष, परिहृत्य प्रमोदभाक् । श्रीमूर्तिमेव पुष्पाद्यै-स्त्रिः पूजयति नित्यशः ॥ ६१ ॥ अन्यदा स श्रियं प्रोचे, निरीक्ष्य प्रहसन्मुखीम् । किं हास्यकारणं मातः!, साऽपि त्वद्वृत्तमित्यवक् ॥ ६२ ॥ किं तन्मद्वृत्तमित्युक्ता, श्रीदेवेन पुनर्जगौ । यथास्थितार्थवचनान्, निहतान्तरशात्रवान् ॥ ६३ ॥ उत्तार्य भवपाथोधेः, प्राणिनो नयतः शिवम् । सुराऽसुरनराधीश-प्रणतक्रमयामलान् ॥ ६४ ॥ देवाधिदेवसर्वज्ञा-नत्राऽमुत्र च शंपुषः । जिनान हित्वा जगज्जन्तु-करुणाऽऽक्रान्तचेतसः ॥ ६५ ॥ आराधयसि यद् भद्र!, मामेवं स्थिरताचिकीः । किञ्च स्थैर्यं मम प्राच्य-पुण्यैरेव न सेवया ॥ ६६ ॥ श्रिया सहासमित्युक्ते, श्रीदेवस्तां पुनर्जगौ । सृजतो मम ते सेवां, यद्भाव्यं तद् भवत्विति ॥ ६७ ॥ आराधयन्नसौ भूरि-भक्तिः कतिपयैर्दिनैः । श्यामास्यां श्रियमालोक्य, श्रीदेवः पुनरभ्यधात् ॥ ६८ ॥ श्यामास्येव किमम्बाऽद्य, लक्ष्यसे साऽपि तं जगौ । उदभूत्तनयो वत्स!, तव गेहे विलक्षणः ॥ ६९ ॥ तद्विलक्षणतादोषा-दतिभक्तिभृतोऽपि ते । मन्दिरं मोक्तुमिच्छामि, चिरसेवितमप्यहम् ॥ १७० ॥ यतः-मर्त्यो भवति तिर्यङ् वा, स कश्चिच्छ्रस्यलक्षणः । लक्ष्मीर्यदनुभावेन, गेहमभ्येति सर्वतः ॥ ७१ ॥ मर्त्यो भवति तिर्यङ् वा, स कश्चिदपलक्षणः । लक्ष्मीर्यदनुभावेन, सद्मनोऽप्यपगच्छति ॥ ७२ ॥ अतः श्यामाननाऽभूवं, त्वद्वियोगेन भाविना । श्रीदेवश्च विपण्णोऽथ, क्व गन्ताऽस्यम्ब! सम्प्रति ॥ ७३ ॥ श्रीरुवाच पुरेऽत्रैव, प्राग्जन्ममुनिदानतः । आर्जिताऽतुलभोगस्य, भोगदेवस्य सद्मनि ॥ ७४ ॥ ततः सद्यः श्रिया त्यक्तः, श्रीदेवो दुःखितोऽभवत् । विस्तृतश्च हिरण्याद्यै-र्भोगदेवोऽथ सार्थपः ॥ ७५ ॥ लक्ष्मीविस्तारमालोक्य, सर्वतोऽपि स्वसद्मनि । सुकृती भोगदेवोऽवक्, प्रियां भोगवती-

मिति ॥ ७६ ॥ गृहे विद्युल्लतालोला, श्रीरास्ते यावदावयोः । तावता देहि दीनादौ, भुङ्क्ष्व चापि यथेप्सितम् ॥ ७७ ॥ दानशीला पुराऽप्येषा, पत्या चैवं प्रणोदिता । मुनिदुःस्थितदीनेभ्यः, श्रद्धयाऽदात् यथार्थितम् ॥ ७८ ॥ अन्यदा तत्पुरोद्याने, केवली समवासरत् । श्रद्धालुचेतसो नैके, वन्दनाय ययुर्जनाः ॥ ७९ ॥ भोगवत्या समं पत्न्या, भोगदेवोऽपि चाययौ । वन्दित्वोपाविशन् सर्वे, धर्ममारव्यच्च केवली ॥ १८० ॥ तथाहि—लक्षाश्चतुरशीतिर्याः, माथिता जीवयोनयः । भ्रान्ता जन्तुभिरत्राणै–स्ताः सर्वा अप्यनन्तशः ॥ ८१ ॥ ये पुद्गलपरावर्त्ता, अनन्तोत्सर्पिणीमिताः । संसरद्भिस्तु संसारे, पूरितास्तेऽप्यनन्तशः ॥ ८२ ॥ परं संसारकान्तारे, भ्रमद्भिरपि दुर्लभः । कृष्णचित्रकवज्जीवैः, क्वापि न प्रापि सद्गुरुः ॥ ८३ ॥ अथाप्तेऽपि गुरौ धर्मं, तदुक्तं बहवो हहा ! । पापाः पुस्तकहन्ताका–न्यमूनीत्यवजानते ॥ ८४ ॥ केचित्तु तत्र तं धर्मं, सम्यक् श्रद्दधते हृदि । न कर्तुमीशते किन्तु, निबद्धनरकायुषः ॥ ८५ ॥ कियन्तस्तु महात्मानः, सम्यक् श्रद्धाय मानसे । सर्वशक्त्या सृजन्तीह, धर्मं सद्गुरुभाषितम् ॥ ८६ ॥ महिम्ना तस्य धर्मस्य, सुसुखैत्तरोत्तराम् । पदवीं ते लभन्ते च, महानन्दपदावधि ॥ ८७ ॥ अथावसरमासाद्य, भोगदेवेन केवली । किं दानस्य फलं स्वामिन्निति पृष्टो जगाद तम् ॥ ८८ ॥ पुरे विशालशालाख्ये, महेभ्यजनसङ्कुले । आस्ते सञ्चयशीलाह्वः, सार्थवाहो महर्द्धिकः ॥ ८९ ॥ तस्य वेश्मनि विद्यन्ते, धनकोटयस्त्रयोदश । परं दत्ते न भुङ्क्ते च, बद्धमुष्टिः स कर्हिचित् ॥ १९० ॥ यो दुर्गतपताकाख्य–स्तस्य सद्मनि कर्मकृत् । स हि दानस्य माहात्म्यं, स्पष्टं कथयिता तव ॥ ९१ ॥ केवल्युक्तं निशम्यैतत्, ॥ दध्यौ हृदि विस्मितः । केनापि कारणेनैवं, ब्रूते सर्वविदप्यसौ ॥ ९२ ॥ पुरे तत्र सुदूरेऽपि, तद्गत्वाऽहं भियासखः । एतत्तात्पर्यमीक्षिष्ये, कौतुकी नाऽलसो यतः ॥ ९३ ॥

पुरे विशालशालाख्ये, प्रश्नार्थं ज्ञातुमुत्सुकः । भोगदेवस्ततः संघो, भोगवत्या समं ययौ ॥ ९४ ॥ भवितव्यतया तत्र, प्रविशन्नेव दुर्गिलाम् । स दुर्गतपताकस्य, गेहिनीं वीक्ष्य पृष्टवान् ॥ ९५ ॥ कुत्र सञ्चयशीलस्य, सार्थवाहस्य मन्दिरम् । साऽप्याहाऽऽगम्यतामत्र, तद्गृहं दर्शयामि वः ॥ ९६ ॥ सार्थेशगृहमागत्य, भोगदेवस्तया समम् । पप्रच्छ सादरं नत्वा तज्जायां धनसुन्दरीम् ॥ ९७ ॥ किं दुर्गतपताकाख्यो, गृहे कर्मकरोऽस्ति वः ? । कार्यं वः किमु तेनैवं, तया पृष्टः स चाब्रवीत् ॥ ९८ ॥ ख्याता दानफलस्यात्र, प्रश्नः सर्वविदोदितः । ततस्तं प्रष्टुमेवाऽऽगां, दूरादहमिहाधुना ॥ ९९ ॥ सखेदमवदत् साऽपि, भद्राभूत् कर्मकृत् स नः । परं मासोऽभवत्तस्य, मृतस्य नवमोऽधुना ॥ २०० ॥ अथ तन्मृतिमाकर्ण्य, भोगदेवो विपादभाक् । तस्थौ तत्रैव सार्थेश-सदनासन्नवेश्मनि ॥ १ ॥ ध्यातवांश्चेयतीं भूमिं, यं प्रष्टुमहमागतः । दैवात्तस्मिन् मृते को मे, प्रश्नाऽर्थं कथयिष्यति ? ॥ २ ॥ अथान्यदा सुतं श्रेष्ठं, सुषुवे धनसुन्दरी । दास्या वर्द्धापितः सद्यः, सार्थवाहो धनाशया ॥ ३ ॥ स तु द्रव्यव्ययाद् भीरु-र्मौनमालम्ब्य तस्थिवान् । विलक्षवदना दासी, निराशाऽगाद्यथागतम् ॥ ४ ॥ अन्यदा गृहमायातः, सार्थवाहश्चतुष्पथात् । सखेदं धनसुन्दर्या, जगदे शृणु वल्लभ ! ॥ ५ ॥ प्राग् ममाजातपुत्रायाः पुण्यैः पुत्रोऽधुनाऽजनि । न तत्र विदधे वर्द्धा-पनमात्रमपि त्वया ॥ ६ ॥ त्यागभोगव्ययाद् भीरुः, कार्पण्यार्जितदुर्यशाः । भूभारभूतया तर्हि, किं कर्त्ताऽसि श्रीयाऽनया ? ॥ ७ ॥ दध्यौ श्रुत्वेति खिन्नोऽसौ, न मे चित्ताऽनुगा प्रिया । यदर्थोपार्जन क्लेशं, जानात्येव न मूलतः ॥ ८ ॥ अत्यर्थमर्थितस्यापि, स्वजनैरर्थिभिस्तथा । न मे कपर्दिकामात्र-मप्युत्तरति चेतसः ॥ ९ ॥ पत्नी त्वर्थार्जनक्लेशा-नभिज्ञा व्ययधीर्धनम् । पुण्ये वर्द्धापनादौ च, प्रच्छन्नं व्ययिष्यति ॥ २१० ॥ शर्फर्यम्बु

कदाऽन्युस्था, पिबतीति न बुध्यते । तथैकःस्वामिनी पत्नी, किं कदा व्ययतीत्यपि ॥ ११ ॥ गृहरक्षानियुक्ता यत्, पत्नी यादृच्छिकव्ययैः । गृहं खनति तन्नूनं, वृत्तिः खादति कर्कटी ॥ १२ ॥ विभिन्नप्रकृतावस्यां, दयितायां ततः कथम् । गृहे स्थिरकरिष्यामि, स्वभावचपलां श्रियम् ? ॥ १३ ॥ इत्यार्तध्यानमापन्नो, जाताऽहारविशूचिकः । तस्मिन्नेव दिने प्राप, पञ्चत्वं सार्थनायकः ॥ १४ ॥ ततश्च धनसुन्दर्या–स्तच्छोकाग्निर्हृदि ज्वलन् । हर्षाश्रुवारिभिः शान्तः, पुत्रालोकाच्छनैः शनैः ॥ १५ ॥ वृद्धेऽथ धनसुन्दर्यां, समये समहोत्सवम् । पुत्रस्य धनदत्तेति, नाम स्वजनसाक्षिकम् ॥ १६ ॥ तत्रैव नगरे सोऽथ, सार्थवाहोऽप्यभूत् सुतः । नागिलाख्यदरिद्रस्य, ह्री ! कर्म बलवत्तरम् ॥ १७ ॥ जातमात्रोऽप्यनिष्टोऽसौ, पित्रोर्दौर्भाग्यदूषितः । क्षुधार्दितः सुदीनात्मा, महाकष्टेन जीवति ॥ १८ ॥ धनदत्तशिशुर्दृष्ट्वा, गेहं परिजनं तथा । जातजातिस्मृतिरथो, सहर्षमिति भाषते ॥ १९ ॥ श्रद्धया यद् ददे दानं, मुनये तत्प्रभावतः । रङ्कस्यापि ममाऽभूवन्, धनकोट्यस्त्रयोदश ॥ २२० ॥ ब्रुवन्तं हस्तमुत्पाट्य, तमिदं पद्यमन्वहम् । भावार्थः कोऽयमस्येति, भोगदेवोऽथ पृष्टवान् ॥ २१ ॥ सोऽप्याह मुनिदानोत्थैः, सुकृतैस्तातकर्मकृत् । स दुर्गतपताकोऽहं, जातस्तातगृहाधिपः ॥ २२ ॥ मुनिदानफले साक्षाद् वीक्ष्य तत्रेदृशं शिशौ । मत्यपो भोगदेवस्य, सर्वविद्वचनेऽजनि ॥ २३ ॥ अन्यदाऽतिशयज्ञानी, मुनिर्भिक्षार्थमागतः । सहर्षमिति जल्पन्तं, तं बालमिदमालपत् ॥ २४ ॥ एकान्तेन त्वया कार्यो, न हर्षो यत् पिता तव । त्यागभोगविहीनश्री–र्धने सत्यपि दुर्गतः ॥ २५ ॥ मृत्वा नागिलधोरस्य, सुतीभूतः क्षुधार्दितः । हन्त पित्रोरपि द्वेष्यो, दुःखं नयति वासरान् ॥ २६ ॥ ( युग्मम् ) येन दत्तं न भुक्तं च, किन्तु क्षिप्तं धनं भुवि । सुखेभ्यः स धुवान्नूनं, भ्रश्यत्युभयलोकयोः ॥ २७ ॥ कर्मकृद्यद् गृहेशोऽभूद्, गृहेशः कर्मकृत्पुनः ।

श्रद्धत्ते को ह्यसम्भाव्य-मेतत्कर्मविचेष्टितम् ॥ २८ ॥ भर्तृवृत्तमिति श्रुत्वा, सदुःखा धनसुन्दरी । सद्यो नागिलमाकार्य, पत्नीपुत्रयुतं जगौ ॥ २९ ॥ सदा मद्गृहकृत्यानि, दम्पती कुरुतं युवाम् । पुत्रं पालयतं चेमं, स्नेहात्स्नानाऽशनादिभिः ॥ २३० ॥ यदेषोऽपि वयःस्थः सन्, भावी कर्मकरो गृहे । प्रतिपद्य तदुक्तं तौ, दम्पती तस्थतुः सुखम् ॥ ३१ ॥ भोगदेवोऽन्यदा रात्रौ, प्रसुप्तो मन्दिरान्तरा । उभे शुश्राव सुन्दर्यौ, संलपन्त्यौ, परस्परम् ॥ ३२ ॥ तथाहि प्रथमा प्रोचे, का त्वं कथय सुन्दरी ! । अन्याख्यत् भोगदेवस्य, गृहलक्ष्मीरहं शुभे ! ॥ ३३ ॥ ततश्च प्रथमा प्राह, क्वास्ते कुशलं स्वसः ! । सदुःखं तत्र निःश्वस्य, द्वितीयाऽप्यभ्यधादिति ॥ ३४ ॥ अन्नान्नत्यागभोगादि-कार्यव्यापृतचेतसा । मम व्यापार्यमाणाया, भोगदेवेन सर्वदा ॥ ३५ ॥ भर्तुराज्ञाप्रधानस्य, कर्मकर्या इवाऽनघे ! । परायत्तस्वभावायाः, कुतः कुशलसङ्कथा ? ॥ ३६ ॥ (युग्मम्) अथाऽन्यामपराऽभाषीत्, स्वसः ! काऽसीति साऽप्यवक् । द्विधा सञ्चयशीलस्य, लक्ष्मीः सार्थपतेरहम् ॥ ३७ ॥ तदास्ते सुखसंवास-स्तव तत्र वद स्वसः ! । इत्युक्ता पुनरप्याद्या, सखेदमिदमभ्यधात् ॥ ३८ ॥ महाघोरान्धकारायां, गर्तायां निहिताऽन्वहम् । अथाप्ता करसम्पर्कं, चिरादर्केन्दुसन्नृणाम् ॥ ३९ ॥ बन्दीत्तरिपुनारीवो-द्विग्ना नित्यनिरोधतः । सदुःखं निवसाम्यत्र, सुखवासस्तु मे कुतः ? ॥ २४० ॥ तदुक्तीरित्थमाकर्ण्य, भोगदेवो विमृष्टवान् । स्वस्वस्थानादिमे नून-मुद्विग्ने संप्रति श्रियौ ॥ ४१ ॥ द्विधा सञ्चयशीलस्य, स्वेच्छया व्ययतश्च मे । दूषणानि श्रियावेते, पश्यतः कथमन्यथा ? ॥ ४२ ॥ न भोगेन न शौचेन, न भक्त्या संग्रहेण न । स्थिरा स्यात् कमला लोला, श्रेयोऽस्या दानमेव तत् ॥ ४३ ॥ स्वभावचपला तेन, श्रीयावद् मां न मुञ्चति । गृह्णामि फलमेतस्या, दत्त्वा पात्रेषु तावता ॥ ४४ ॥ अथ स्वपुरमागत्य, चैत्येष्वष्टाह्निकामहम्

चतुर्विधस्य सङ्घस्य, विधायाऽर्चां च सादरम् ॥ ४५ ॥ अनाथदीनदुस्थेभ्यो, दत्त्वा दानं यथार्थितम् । सुहृत्स्वजनबन्धूंश्चा-
पृच्छ्य सन्मानपूर्वकम् ॥ ४६ ॥ कुटुम्बभारमारोप्य, भोगदत्ताऽभिधे सुते । वर्धमानशुभध्याना-ध्यवसायो विशुद्धधीः ॥ ४७ ॥
अहं श्वः प्रव्रजिष्यामी-त्युक्तवेता निशि श्रिया । सुतः स्त्रीरूपधारिण्या, भोगदेवो न्यगद्यत ॥ ४८ ॥ ( चतुर्भिः कलापकम् )
भोगदेव ! त्वया दत्ता, भुक्ता चाहं यथारुचि । अभुंक्त्वन्त्येव मुक्ता च, च्छलिताऽसि ततस्त्वया ॥ ४९ ॥ तवेदृं तेन किं
कुर्वां, सोऽप्यागमा सुतेन मे । वर्तिष्यामीति प्रोक्तवत्, मौनीय तिरोहिता ॥ २५० ॥ ततः प्रातः प्रवव्राज, प्रशान्ताचार्यसन्निधौ ।
भोगदत्ता सार्धं भोगदेवो भोगनिस्पृहधीः ॥ ५१ ॥ दम्पती तौ सदोद्युक्तौ, पुण्यश्रामण्यपालने । स्वाध्यायाध्ययनासक्तौ,
तेपाते दुस्तपं तपः ॥ ५२ ॥ विहिताराधनौ प्रान्ते, प्रपन्नाऽनशनौ च तौ । एकावतारौ सर्वार्थ-सिद्धिसम्पदमीयतुः ॥ ५३ ॥
इतश्च श्रुणु सद्भाग्य, श्रीदेवः सहदेव यः । स कुर्वन् जीविताद्यर्थं, कुकर्माण्यन्यवेश्मनि ॥ ५४ ॥ श्रीदेव ! श्रीः कथं
भ्राता, निःपुण्यतोऽपि ते । इत्यभाषो जनैर्देवेन, कांक्ष नयत्यनेहसम् ॥ ५५ ॥ ( युग्मम् ) जातमात्रे सुते तस्मिन्, जगामाधास्य
सद्मनः । सम्प्राप्तरत्नं रमा दैवात्, निष्प्रः स निर्लक्षणः ॥ ५६ ॥ ततः श्रीः पुनरप्यस्य, पुण्यैर्मन्दिरमीयुषी । माननीयस्तथा
भ्रातृ, ज्ञातः स्वजनबन्धुषु ॥ ५७ ॥ अथ सम्पन्नसम्पत्ति-र्धनोन्मादात्परो पुनः । इच्छोपनतभोगाङ्गः, परिणिन्ये परां स्त्रियम् ॥५८॥
भगा-भवभीता पुत्र-रागाणामस्मातकः । पूर्वोपार्जितमित्राणां, दाराणामथ भेवनाम् ॥ ५९ ॥ रजन्यामेकदा सार-सुख-
भुक्तानां पुनः । रुदती सुरती वीक्ष्य, श्रीदेवः पृष्टवानिति ॥ २६० ॥ का त्वं केन निमित्तेन, सदुःखमिति रोदिषि ? ।
॥ पृच्छते भाषती- तिरश्चाकुलत्वं पुनः ॥६१ ॥ यतः श्रीदेव ! यां नारीं, द्वितीयां त्वमुदूढवान् । अलक्ष्मीः सा पुनै

७ *

तेन, सह वासस्तया न मे ॥ ६२ ॥ तद्भाविना वियोगेन, तव भाविकचेतसः । दुःखिता रोदिमीत्युक्त्वा, सा तिरोऽधत्त तत्क्षणात् ॥ ६३ ॥ अथासौ प्रातरुत्थाय, यावत् स्वगृहमीक्षते । तावद्धनधान्याद्यै, रिक्तं सर्वत्र पश्यति ॥ ६४ ॥ तदा च स विषण्णात्मा, चिन्तयामासिवानिदम् । नक्तमुक्तं यथा लक्ष्म्या, नूनं निर्वाहितं तथा ॥ ६५ ॥ किमुदूढा हहा नारी, द्वितीया कुधिया मया । यया सहानवस्थान-वैरेण श्रीर्गता गृहात् ॥ ६६ ॥ अलं वा तद्विपादेन, यद् यियासुः स्वयं रमा । यत्तदालम्बनान्येवं, मुधा कल्पयति ध्रुवम् ॥ ६७ ॥ ततो दारिद्र्यदूनात्मा, कर्माण्यन्यगृहे सृजन् । पराभवपदं जज्ञे, श्रीदेवो जीविताबधि ॥ ६८ ॥ यो नाऽमंस्त तृणायापि, परान् यत्र पुरे श्रिया । जातस्तत्रैव हा कष्टं, सोऽन्यसद्मनि कर्मकृत् ॥ ६९ ॥ स्वभावचपलां धीमान्, कमलामचलामपि । प्रतिबन्धविमुक् सौव-कार्यार्थमनुवर्तते ॥ २७० ॥ शुचिबोद्रः श्रियाऽमोचि, निघ्नन् पादेन रोषतः । यत्तत्कारणमुद्दिश्य, श्रीदेवश्चार्चयन्नपि ॥ ७१ ॥ मुक्तः सञ्चयशीलोऽपि, रसतृष्णाविलादपि । भोगदेवश्च भुञ्जानो, ददानश्च यथार्थितम् ॥ ७२ ॥ तत्स्थिरीकरणोपायः, कश्चनापि न विद्यते । तुलत्कल्लोललोलायाः, कमलायाः जगत्यापि ॥ ७३ ॥ न ददाति न भुङ्क्ते च, यो निधत्ते तु तृष्णया । धने सत्यप्यसौ दुःस्थः, पुमान् सञ्चयशीलवत् ॥ ७४ ॥ समाः सञ्चयशीलेन, सन्त्यत्र बहवो नराः । छलयित्वा निजं दास-कर्म ये कारिता जनाः ॥ ७५ ॥ भोगदेवसमाः किन्तु, पुण्यास्तेऽत्र पञ्चषाः । दत्त्वा भुक्त्वा च यैरेषा, स्वेच्छया च्छलिता रमा ॥ ॥ ७६ ॥ भुङ्क्ते च श्रद्धया दत्ते, दृष्ट्वा यथा-नुमोदते । भोगदेव इवाप्नोति, सौख्यं सोभयलोकयोः ॥ ७७ ॥ स्वयं यान्ती गृहाल्लक्ष्मीः, परितापाय भूयसे । सती मुक्ता तु सा पुंसां, सुखानन्त्याय कल्पते ॥ ७८ ॥ किञ्च—आधिव्याधिव्यथाजन्म-जरामरणवर्जितम् । इच्छताऽपुनरावृत्ति-

पदं चेच्छिवमव्ययम् ॥ ७९ ॥ स्वभावचपलां राज्य-कमलां कुलटामिव । परिहृत्य तदा वत्साः !, सेवध्वं संयमश्रियम् ॥२८०॥

॥ इति श्रीतपागच्छाधिराजश्रीसोमसुन्दरसूरिपट्टप्रभाकरगच्छनायकपरमगुरुश्रीमुनिसुन्दरसूरिविनेयवाचनाचार्य-सोममण्डन-गणिकृतायां श्रीयुगादिदेशनायां तृतीय उल्लासः ॥

# अथ चतुर्थ उल्लासः ॥

गणेशसेव्यः स्मरभिद्, गिरिशो वृषभासितः । शङ्करः श्रीमहादेवः, सम्पदे वः सनातनः ॥ १ ॥ अथावन्तिपतेः स्वामि-सुतोऽवन्तीति विश्रुतः । अभ्यन्तरे प्रणम्येत्थं, प्राञ्जलिः प्रभुमूचिवान् ॥ २ ॥ सर्वसङ्गपरित्यागात्, शुद्धसंयमसेवया । जगज्जन्तुहितान्वेषी, भवानादिष्टवान् शिवम् ॥ ३ ॥ विषयानसतोऽप्यत्र, केचित्तण्डुलमत्स्यवत् । यत्नादिभिन्नाभ्यासात्, स्पृहयन्ति वृथाऽङ्गिनः ॥ ४ ॥ अयत्नोपनेतानेतान्, प्राक्तनैर्भोग्यकर्मभिः । वयं तदधुना मोक्तुं, सहसा कथमीश्महे ? ॥ ५ ॥ अथ तत्रावदत् पुत्र-प्रतिबोधकृतोद्यमः । विभुर्विषयवैरस्यं, सुधामधुरया गिरा ॥ ६ ॥ आपातमात्रमधुराः, परिणामेऽतिदारुणाः । विषया वर्जिता विज्ञैः, किम्पाकफलसन्निभाः ॥ ७ ॥ विषयेषु विमुह्यन्ति, मध्यमा एव नोत्तमाः ।

श्लेष्मणीवाऽतिबीभत्से, मक्षिका एव नालयः ॥ ८ ॥ यदुक्तम्— विषयगणः कापुरुषं, करोति वशवर्तिनम् । न सत्पुरुषं
बध्नाति, मशकमेव हि लूतातन्तुर्न मातङ्गम् ॥ ९ ॥ तुच्छत्वात् क्षणिकत्वाच्च, नैवेन्द्रियसुखं सुखम् । तत्त्वतो यद् बुधै-
रिष्ट-मनन्तं शाश्वतं सुखम् ॥ १० ॥ अज्ञानाद्रमते बालः, स्वपुरीषेऽपि मुग्धधीः । जुगुप्सनीये मोहान्ध-स्तथा विषयकर्दमे
॥ ११ ॥ मोहान्धानां सुखायन्ते, विषया दुःखदा अपि । स्वर्णायते यथा लोह-मपि धत्तूरितात्मनाम् ॥ १२ ॥ चिरेणापि
यतो दुःखं, यद्विनश्यति वा चिरात् । यदन्ते च ध्रुवं मृत्युः, कथं तद् भण्यते सुखम् ? ॥ १३ ॥ विषादप्यतिरिच्यन्ते,
विषयाः खलु यद्विषात् । एकशो म्रियते प्राणी, विषयेभ्यस्त्वनन्तशः ॥ १४ ॥ एकैकेन पतङ्गाद्या, म्रियन्ते विषयेन चेत् ।
पञ्चता तत्समं पञ्च, सेवमानस्य निश्चिता ॥ १५ ॥ वत्साः ! पञ्चेन्द्रियार्थेषु, भृशासक्तिभृतां नृणाम् । इहाऽमुत्र च दुःखानि,
दारुणानि निशाम्यत ॥ १६ ॥ तथाहि-कलिङ्गविषये प्रौढ-प्रासादश्रेणिमण्डितम् । सुवर्णमणिमुक्ताढ्य-मभूत् स्वर्णपुरं
पुरम् ॥ १७ ॥ श्रेष्ठी सुमङ्गलस्तत्र, नृपामात्यादिसंमतः । धनदानदयादक्षो, दाक्षिण्यादिगुणास्पदम् ॥ १८ ॥
कलत्रं चाऽभवत्तस्य, प्रेमपात्रं जयावली । भर्त्रादिविनयोद्युक्ता, कुशला गृहकर्मसु ॥ १९ ॥ चतुःषष्टिकलादक्षा, सुन्दरी तनया
तयोः । देहिनी रूपसौभाग्य-मोहिनीव मनोभुवः ॥ २० ॥ साऽन्यदा सुन्दरेणेभ्य—सुरसुन्दरजन्मना । सखीजनवृताऽदर्शि,
व्रजन्ती राजवर्त्मनि ॥ २१ ॥ तदा तद्दर्शनाद्विद्धः, सुन्दरः स्मरमार्गणैः । तामेव सर्वतः पश्यं-स्तन्मयीभूतमानसः ॥ २२ ॥
जनेऽपि विजने चापि, स्वप्ने वा जागरेऽपि वा । न धृतिं क्वचिदप्याप, मीनः स्वल्प इवाऽम्भसि ॥ २३ ॥ ( युग्मम् )
मित्रेभ्यो ज्ञातवृत्तोऽथ, तदवस्थं विलोक्य तम् । सुमङ्गलं ययाचे तां, सुताय सुरसुन्दरः ॥ २४ ॥ कुलसत्त्ववराद्यङ्गै-र्विभाव्य

हृदि योग्यताम् । दत्तेत्यवदत् श्रेष्ठी, स्वस्थो जातश्च सुन्दरः ॥ २५ ॥ अथान्यस्तत्र वास्तव्यो, बहुस्वजनसेवितः ।
कुबेरेण समानार्द्धिः, कुबेरोऽभूद् वणिग्वरः ॥ २६ ॥ समन्यागत्य तेनापि, गौरवेण जयावलीम् । मत्सुताय सुतां देही-त्युक्तः
प्रत्यशृणोदिदम् ॥ २७ ॥ ततो लग्ने विवाहाय, युगपत् स्वजनैर्वृतौ । सुमङ्गलगृहद्वारे, वरौ प्रापतुभावपि ॥ २८ ॥ पुरान्तः
समपमानार्हौ, समस्वजनवैभवौ । दानदुर्ललितौ मत्त-गजाविव निरङ्कुशौ ॥ २९ ॥ सन्नद्धैः सायुधैः स्वामि-भक्तैः स्वस्वभटैर्वृतौ ।
एकद्रव्याभिलाषेण, योद्धुं लग्नावुभावपि ॥ ३० ॥ ( युग्मम् ) महाजनप्रधानेभ्यो-र्युक्त्या पर्यवसायितौ । साहङ्कारतया किन्तु,
निवृत्तौ समरान्न तौ ॥ ३१ ॥ भटानां तुमले तत्र, जायमानेऽभितो भृशम् । किंकर्तव्यतया मूढा-स्तदा श्रेष्ठी सुमङ्गलः ॥ ३२ ॥
प्रौढप्राभृतमादाय, समृद्धः स्वजनैः समम् । नृपं विज्ञापयामास, स्वंवृत्ताख्यानपूर्वकम् ॥ ३३ ॥ पादाववधार्यतां देव !, मण्डपे
मम सम्मनि । यद् भावी कलहोच्छेदो, नान्यथा द्वितयोस्तयोः ॥ ३४ ॥ प्रजासु वत्सलत्वेन, प्रतिपद्य तदीरितम् । आगत्य
मन्डपे भूपः, सुपल्यङ्के निपण्णवान् ॥ ३५ ॥ स्वसुतां दर्शयन् श्रेष्ठी, निपत्य नृपतेः पदोः । एवं व्यजिज्ञपत् सर्व-मन्त्रि-
सामन्तसाक्षिकम् ॥ ३६ ॥ वरस्यान्यतरस्यैषा, दीयतां स्वेच्छया विभो ! । आदेशस्य न हि ज्योति-रिति तत्सर्वसंमतम्
॥ ३७ ॥ रूपलावण्यसौभाग्या-धरीकृतसुराङ्गनाम् । निरीक्ष्य सुन्दरीकन्यां, स्मरज्वरभराऽर्दितः ॥ ३८ ॥ राजा
परिणिनीषुस्तां, मृषोत्तरमिति व्यधात् । सम्मत्येव ममाकस्मा-च्छिरोऽर्तिर्विषमाऽभवत् ॥ ३९ ॥ ( युग्मम् )
तद्व्यथाव्याकुलो जाने, न व्यक्तिमुदयास्तयोः । युक्तायुक्तविमूढस्तत्, कथं कन्यां ददेऽधुना ? ॥ ४० ॥
श्वश्च लग्नं ततः श्रेष्ठिन् !, वरौ च विसृजाऽधुना । विमृश्याहं च यद्युक्तं, विधास्ये स्वयमेव तत् ॥ ४१ ॥ भणित्वेति निजा-

यास—मागतो नृपतिस्तदा। सुन्दरीमेव सर्वत्र, पश्यंस्तद्गतमानसः ॥ ४२ ॥ निश्चलात्मा विमुक्ताऽन्य-व्यापारः शून्यमानसः। ध्यानकोष्ठाश्रयोगीव, नृपोऽभूत् सुन्दरीं स्मरन् ॥ ४३ ॥ किश्च—हृत्स्थायां नृपतेस्तस्यां, रुच्या नैकाप्यभूत् मिथा। वल्लिनाहाररेखायां, रूप्यमप्यशनं यथा ॥ ४४ ॥ एकः सुरेष्वनङ्गोऽपि, मन्ये समत्ययः स्मरः। सकलोऽपि नराधीशो, येन द्राग् विकलीकृतः ॥ ४५ ॥ यदुक्तम्—विकलयति कलाकुशलं, हसति शुचिं पण्डितं विडम्बयति। अधरयति धीरपुरुषं, क्षणेन मकरध्वजो देवः ॥ ४६ ॥ अथ सेवागतो मन्त्री, तादृशं वीक्ष्य भूपतिम्। उन्मनो दुर्मनाः स्वामिन्!, किं त्वमद्येति पृष्टवान् ॥ ४७ ॥ नृपोऽप्याह महामात्य!, पीडितस्य स्मरेषुभिः। शरणं श्रेष्ठिकन्या सा—ऽथवा मरणमेव मे ॥ ४८ ॥ श्रुत्वेति सचिवो दध्यौ, दशाऽवस्था हि कामिनाम्। चिन्ता च सङ्गमेच्छा च, निःश्वासाश्च ज्वरस्तथा ॥ ४९ ॥ देहे दाहोऽरुचिश्चान्ते, मूर्च्छाऽथोन्माद एव च। नवम्यां प्राणसन्देहो, दशम्यां मुच्यतेऽसुभिः ॥ ५० ॥ पूर्वमेव ततो युक्त्या, नृपमाश्वास्य याम्यहम्। गते हि सलिले सेतु-बन्धो नूनं निरर्थकः ॥ ५१ ॥ विमृश्येति नृपं प्राह, कार्यं हस्तगतं हृदः। आत्माज्ञावशवर्त्येष, श्रेष्ठी येन सुमङ्गलः ॥ ५२ ॥ गृहे गत्वा तथा साम्ना, भणिष्यामि सुमङ्गलम्। स यथा मुदितः स्वामिन्, स्वयं दास्यति ते कन्याम् ॥ ५३ ॥ इति वाक्यर्मनाक् स्वस्थी-भूतचित्तो जगौ नृपः। त्वयि मन्त्रिणि दुष्प्रापं, किं बुद्धिमकराकरे ? ॥ ५४ ॥ सुमतिः श्रेष्ठिगेहेऽगात्, स्वामिकार्योत्सुकस्ततः। अभ्युत्थानादिसत्कारं, तस्य श्रेष्ठ्याऽपि निर्ममे ॥ ५५ ॥ अमात्योऽप्यवदत् श्रेष्ठिन्!, परिणामहितं शृणु। राज्ञा त्वद्दुहिताऽदर्शि, यदा मोहनवल्लरी ॥ ५६ ॥ ततः प्रभृति भूजानि—स्तामेव हृदि संस्मरन्। रागोरगविषावेग-विस्मृताऽन्यक्रियोऽजनि ॥ ५७ ॥ तस्य तामौपयीं श्रेष्ठि-श्चेत् कथञ्चिन्न दास्यसि। मारिष्यति तदा राजा,

स्मरापस्मारतो ध्रुवम् ॥ ५८ ॥ मृते तस्मिन् विनङ्क्ष्यन्ति, प्रजा निःस्वामिका इमाः । इत्यालोच्य हृदा श्रेष्ठिन्!' कुरुष्वाऽत्र यथोचितम् ॥ ५९ ॥ नृपसत्का हि नः प्राणा, अपि कन्या पुनः किमु ! । ततः परिणयत्वेनां, राजेत्याख्यत् स नैगमः ॥ ६० ॥ ततो हृदाऽवदन्मन्त्री, कार्यसिद्धिं नरेशितुः । तां गान्धर्वविवाहेनो—पयेमे च मुदा नृपः ॥ ६१ ॥ रूपलावण्यसौभाग्यै—रावर्जितमना नृपः । चकार सुन्दरीमेव, सकलान्तःपुराऽधिपाम् ॥ ६२ ॥ अथ तस्यामुदूढायां, महीपेन महौजसा । कुबेरेभ्यतनुजन्मा, तदाशांसाग्रहं जहौ ॥ ६३ ॥ सुन्दरस्तु स्मरान्धत्वा—मुदूढामपि भूभुजा । दुरापां शेषशीर्षस्थ—मणीमिव समीहते ॥ ६४ ॥ रागान्धकारपटलै—राहतान्तरलोचनः । उदर्कमशुभं तत्र, स तु स्वस्य न पश्यति ॥ ६५ ॥ यतः—न पश्यति हि जात्यन्धः, कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तो, दोषमर्थी न पश्यति ॥ ६६ ॥ न पश्यति दिवा घूकः, काको नक्तं न पश्यति । कामान्धः कोपपापीयान्, दिवा नक्तं न पश्यति ॥ ६७ ॥ ततः स्मरवशात्माऽसौ, त्यक्तान्यसकलक्रियः । सुन्दरीसङ्गमोपायं, सर्वदाऽपि समीक्षते ॥६८॥ स दासीमथ सुन्दर्या, मिलितामन्यदा रहः । वस्त्रालङ्कारताम्बूलैः, स्वार्थाय समतूतुषत् ॥ ६९ ॥ सुन्दर्यग्रे तथा चक्रे, साऽपि सुन्दरवर्णनाम् । यथा सा सुन्दरी जाता, गाढं तदनुरागिणी ॥ ७० ॥ बभाण च निजां दासीं, सखीवेषेण सुन्दरः । कथञ्चिदत्र यथैति, नित्यमानीयतां तदा ॥ ७१ ॥ भूपमप्याह सा देव!, सुहवा नाम मत्सखी । त्वद्गिराऽत्र सदाऽप्येतु, काञ्चिकैरनिवारिता ॥ ७२ ॥ प्रतिपन्ने नृपेणैवं, दास्याऽऽहूतः स सुन्दरः । नित्यमेति सखीवेषः, सुन्दरीवासवेश्मनि ॥ ७३ ॥ स्वेच्छया रममाणस्य, सुन्दर्या समभन्वहम् । क्षणवत् सुन्दरस्यैवं, कियन्तो वासरा ययुः ॥ ७४ ॥ अन्यदोक्तः स सुन्दर्या, यमस्याभे नृपोऽरुसि !

यत्सदायासि मद्देहे, क्रियाधिक्यं त्वयेक्षितम् ॥ ७५ ॥ किञ्च–अत्यन्तविषयासक्तः, सङ्कटेऽत्र त्वमाविशन् । दुग्धं पश्यसि–मार्जार, इव नो लकुटं पुनः ॥ ७६ ॥ ईषद्विहस्य तामाह, सुन्दरः शृणु सुन्दरि ! । गुणाधिक्यं विना कोऽपि, यमास्यं प्रविशेत् किमु ? ॥ ७७ ॥ तथाहि–सुवृत्तममृतश्रावि, शारदं चन्द्रमण्डलम् । त्वदाननतुलामर्ह–त्यकलङ्कं भवेद्यदि ॥ ७८ ॥ आकर्णमायते नेत्रे, तवान्तःशितितारके । अन्तर्निलीनभ्रमरे, स्मरे तामरसे इव ॥७९॥ जात्यचन्दनकर्पूर–कस्तूरीसारसौरभः । तव श्वासाऽनिलः सुभ्रु !, नाऽल्पपुण्यैरवाप्यते ॥ ८० ॥ सुधापातालकुण्डेषु, कविरूढिरियं किल । वस्तुतस्तु सुधां मन्ये, जिह्वाग्रे चाऽधरे तव ॥ ८१ ॥ नवनीताऽर्कतूलादि–स्पर्शा मृदुमनोहराः । शतांशेनाऽपि नाऽर्हन्ति, वपुःस्पर्शस्य ते तुलाम् ॥ ८२ ॥ किं बहुना ?–पूर्णेन्दुमुखी–त्रस्त–मृगाक्षी गजगामिनी । करभोरुः प्रवालोष्ठी, गजकुम्भोन्नतस्तनी ॥ ८३ ॥ सर्वावयवसौन्दर्या–भङ्गसौभाग्यशालिनी । कामिनीषु त्वमेवाऽसि, शृङ्गाररसवाहिनी ॥ ८४ ॥ ( युग्मम् ) पुनः स्मितमुखी सुन्दर्युवाच शृणु सुन्दर ! । परिणामहितं स्वस्य, न पश्यसि वरं न तत् ॥ ८५ ॥ दुर्जनाः कुदृशो नैके, परापत्परितोषिणः । परेषु सदसद्दोषाऽरोपस्तेषां हि देवनम् ॥ ८६ ॥ जानीयात् त्वामिहाऽऽयान्तं, चेद् दुर्जनमुखान्नृपः । क्रोधान्धस्तदयं कुर्याद्, दारुणास्ते विडम्बनाः ॥ ८७ ॥ नैतत्कर्म शुभोदर्क, भवतो भावि सुन्दर ! । बिले बिले प्रक्षिपता, करं यत्कुशलं कियत् ? ॥ ८८ ॥ आख्यच्च सुन्दरः सुभ्रु !, हनिष्यति न वा नृपः । त्वद्वियोगे तु मत्प्राणाः, सम्प्रत्येव व्रजन्त्यमी ॥ ८९ ॥ ततो मा विपदः कान्ते !, यद्भाव्यं तद् भविष्यति । यावज्जीवं ध्रुवो भूयात्, संयोगः पुनरावयोः ॥ ९० ॥ इति सुन्दरसुन्दर्यो–रुक्तिप्रत्युक्तिविस्तरम् । सर्वं शुश्राव भूपालः, कुड्यान्तरगतः स्वयम् ॥ ९१ ॥ क्रोधाध्मातमना भूप–

भिन्नामापातिरानिदम् । गहनं स्त्रीचरित्रं हा, न जानन्ति बुधा अपि ! ॥ ९२ ॥ उक्तं च–प्राप्तुं पारमपारस्य, पारावारस्य पार्यते । स्त्रीणां प्रकृतिवक्राणां, दुश्चरित्रस्य नो पुनः ॥ ९३ ॥ कुल्याः शीलवतीरन्या, राज्ञीरवगणय्य या । पट्टराज्ञी कृता हा !पितृ, तस्याश्चरितमीदृशम् ! ॥ ९४ ॥ यः पुमानेतदासक्तः, सदाऽप्येति सखीमिषात् । स एव शिक्षणीयः प्राग्, प्रादुष्कृत्य सदोऽन्तरे ॥ ९५ ॥ इत्यालोच्य क्षमाऽधीशो, ज्वलन्नपि हृदि क्रुधा । बहिः संवृतिमाधाय, सभायामुपविष्टवान् ॥ ९६ ॥ मायास्त्रीत्वधृतोऽथास्य, द्वारि निर्गच्छतस्तदा । जहाराधोंऽशुकं भूप–सङ्केतेन विदूषकः ॥ ९७ ॥ नरोऽयमिति विज्ञातः, सर्वसामाजिकैरसौ । अन्यायीति निबद्धश्च, सहसा भूपपूरुषैः ॥ ९८ ॥ तस्य छित्त्वा श्रुती नासां, जिह्वां चाऽऽकृष्य कोपने । स्वयमुत्कृत्यसर्पाङ्गं, भूपः शास्त्रमचीचरत् ॥ ९९ ॥ मषीलिप्ततनुं पश्चाद्, गलद्रुधिरपङ्किलम् । विधृतच्छन्नकच्छत्र–मारोप्याऽकर्णरासभे ॥ १०० ॥ सप्रमोदं खलजनैः, सविषादं च सज्जनैः । विलोक्यमानं बालैश्च, सकोलाहलकौतुकम् ॥ १ ॥ वाद्यमानेषु वाद्येषु, काहलाडिण्डिमादिषु । सर्वत्र नगरस्यान्त–र्भ्रमयित्वा चतुष्पथे ॥ २ ॥ चहिर्नीत्वा नृपः कोपात्, शूलायां तमनिक्षिपत् । पापकर्मभिरत्युग्रै––रिहाप्येवं विडम्बना ॥ ३ ॥ ( चतुर्भिः कलापकम् ) रौद्रध्यानेन मृत्वाऽथ, सुन्दरः सप्तमाऽवनौ । त्रयस्त्रिंशत्सागरायु–र्नारकोऽजनि दुःखभाक् ॥ ४ ॥ राज्ञा निष्कासिता रोषात्, छिन्नश्रवणनासिका । सुन्दर्यथ पितुर्द्वारे, जगाम गुरुदुःखभाक् ॥ ५ ॥ पितरौ तादृशीं वीक्ष्य, पुत्रीं गृहमागताम् । तद्दुःखदुःखितौ गाढं, विलापानि वितेनतुः ॥ ६ ॥ प्रार्थनीया तथा भूत्वा, सचिवश्रेष्ठिभूभुजाम् । वत्से!त्वमीदृशी वत्से!, कथमासाऽसि सम्प्रति ? ॥ ७ ॥ सरसेक्षुलतेवासीः, पूर्वमिष्टा महीभुजः । सहसा किमनिष्टाऽभू–र्विपत्र-

छीव साम्प्रतम् ? ॥ ८ ॥ सुतां प्राग् मण्डितां वीक्ष्या-ऽधुनालेवं कदर्थिताम् । हृत् पित्रोर्नाऽस्फुटद्यद् द्राक्, तद्वज्रघटितं हि तत् ॥ ९ ॥ दुःशीलेयं सपत्नीयुग्, भर्तुर्नाऽभिमता तथा । निरपत्याऽथवा चैवं, पित्रोर्दुःखाय पुत्रिका ॥ ११० ॥ कलङ्कौकः सुता येषां, परमन्दिरमण्डना । वप्तृवित्तहरी नाऽभूत्, सुखिता भुवि ते नराः ॥ ११ ॥ सुन्दर्येन्द्रियचापल्या-ज्ज्ञात्वकृत्यं कृतं यदि । नेदृक्कर्म तथाप्यस्यां, प्रजापाल ! तवोचितम् ॥ १२ ॥ यतः–अपराधशतं साधुः, सहेदेकोपकारतः । शतं चोपकृतीर्नीचो, नाशयेदेकदुष्कृतात् ॥ १३ ॥ जने कृतापराधेऽपि, निष्क्रोधाः स्युः खलूत्तमाः । मध्यमा मध्यमक्रोधा, महाक्रोधास्तथाऽधमाः ॥ १४ ॥ कन्दुकैरिव मत्तेभ-कुम्भैः क्रीडितपूर्विणौ । रणान्तस्ते करौ वीर-व्यूढौ किमबलाजने ? ॥ १५ ॥ प्रलप्येति सुताकण्ठे, विलप्य रुदिती तथा । यथा सर्वः समीपस्थोऽप्यासीद् बाष्पाविलेक्षणः ॥ १६ ॥ विमुक्तभक्तपानीया, विषादविधुराजया । अथ दुःखभराक्रान्ता, सुन्दर्याह सगद्गदम् ॥ १७ ॥ प्रसृत्वरयशोज्योत्स्ना—विशदीकृतभूतलः । मृगेणेव शशी तात, मया यत्त्वं कलङ्कितः ॥ १८ ॥ दुष्कर्मपरितापाग्नि-प्रज्वलन्मनसो मम । क्षन्तव्यं तत्त्वया सर्वं, सर्वदाऽपत्यवत्सल ! ॥१९॥ (युग्मम्) भूत्वा तवाऽम्ब ! दुहिता, दयिता च महीभुजः । इति लाघवमासाद्य, तेन दूये स्वचेतसि ॥१२०॥ पञ्चाक्षी प्राघुणाः प्राणाः, प्रतिबन्धो न तेषु मे । परं मरणमेवेदं, सकलङ्कं दुनोति माम् ॥ २१ ॥ यदेव विमलं शील-धनमिन्द्रियतस्करैः । हृतं मम तदैवाहं, मृतिमाप्ताऽस्मि वस्तुतः ॥ २२ ॥ भवे भवे मे भूयास्तं, वत्सलौ पितरौ युवाम् । मा भूदेवंविधं दुःखं, प्रार्थितं यदि लभ्यते ॥ २३ ॥ साऽथ सानुशया मृत्वा, स्वयं श्वासनिरोधतः । नरके नारकीभूय दुःसहाः सहते व्यथाः ॥ २४ ॥ एवं सुन्दरसुन्दर्यो-रत्राऽमुत्रापि चाभवत् । अत्यन्तविषयासक्त्या, दारुणा दुःखं-

दुःशीलामपि लक्षणैः ॥ ४२ ॥ विचिन्त्यैवं स सामन्ता-नूचे या वः कनी भवेत् । जातमात्रैव साऽऽनीय, दर्शनीयाऽत्र मत्पुरः ॥ ४३ ॥ पवनाह्वोऽथ सामन्तो, जातमात्रां स्वबालिकाम् । आनीयाऽदर्शयद्भूपं, सोऽपि शास्त्रविदश्च ताम् ॥ ४४ ॥ ततः शास्त्रविदोऽप्येत-ज्जन्मलग्नाङ्गलक्षणैः । निर्णीय पुंश्चलीमेतां, राजानमिदमूचिरे ॥४५॥ हित्वा हित्वाऽथवा राज-न्नेषा भर्तृत्रयं क्रमात् । परनीष्वति पण्यस्त्री, जीवनाऽवधि भाविनी ॥ ४६ ॥ अथ मिथ्याचिकीरेतत्, कर्तुमेतां पतिव्रताम् । तदैवोद्वाह्य भूपालः सद्यो भूमिगृहेऽक्षिपत् ॥ ४७ ॥ अथ धात्री नृपादेशात्, तत्रस्था तामवीवृधत् । कामक्रीडावनं चैषा, क्रमाद्यौवनमीयुषी ॥४८॥ ततो भूमिपतिर्धात्रीं, बहिर्निष्कास्य भूगृहात् । विज्ञानौचित्यकुशलां, विदधे तां शनैः शनैः ॥ ४९ ॥ यौवनोद्भिन्नलावण्य-रूपसौभाग्यशालिनीम् । मत्वाहं परमप्रीत्या, नृपतिस्तामरीरमत् ॥ १५० ॥ कियत्प्रमाणं भूपीठं, क्व जगाम च मत्प्रभुः ? । यात चागत्य कुत्रैवं, साऽप्राक्षीन्नृपमन्यदा ॥ ५१ ॥ भूपीठमियदेवेदं, त्वत्प्रभुश्च व्यपद्यत । सर्वत्राऽस्खलितः स्वैरं, स्वर्गिवाहं चरामि च ॥ ५२ ॥ आवामेवाधुना सर्व-भूपीठे पुंस्त्रियौ प्रिये ! । इत्याख्यच्च नृपो धूर्त-तया हृदयकल्पितम् ॥ ५३ ॥ ( युग्मम् ) साऽप्यदृष्टान्यापेक्षया, जन्मतो भूगृहस्थिता । मण्डुकीवाऽवटस्यैतत्, सर्वं सत्यममन्यत ॥ ५४ ॥ पातालगृहवासित्वान्नाम्ना पातालसुन्दरी । शुद्धशीलाऽभवत् साऽन्य-पुंसो नामाऽप्यजानती ॥ ५५ ॥ परमन्तःपुरं हित्वा, राज्यकार्येश्लथादरः । रूपादिरञ्जितो नित्यं, तदासक्तोऽभवन्नृपः ॥ ५६ ॥ अथ तत्राऽन्यदाऽऽयासीत्, सार्थवाहो महर्द्धिकः । रूपेणाऽनङ्गदेवाभोऽनङ्गदेवाभिधः सुधीः ॥ ५७ ॥ जात्यमुक्तामणीहारा-द्युपायनकरोऽथ सः । राजन्यरञ्जनो देव-मिव राजानमानमत् ॥ ५८ ॥ भूपालोऽपि प्रसन्नास्यः, शुल्कं मुक्त्वाऽभिनन्द्य तम् । सभायां सर्वदाऽऽगम्य-मित्यवोचद्गुणप्रियः ॥ ५९ ॥ राजप्रसादमासाद्य,

सार्थेशो मुदितो हृदि । भाटकाप्ते महावासे, न्यवसत् परिवारयुक् ॥ १६० ॥ पण्यैर्देशान्तरानीतै–र्महामूल्यैश्चतुर्विधैः । शुद्धं व्यवहरंश्चात्र, बहुद्रव्यमुपार्जयत् ॥ ६१ ॥ बहुद्रव्याऽन्याचित्तज्ञो, वार्ताविधिविचक्षणः । यथावसरमागत्य, राजानं चाप्यरञ्जयत् ॥ ६२ ॥ पातालसुन्दरीरूपा–क्षिप्तोऽथ मना विना । साचिवाद्यनुवृत्त्यर्थं, सदस्यायाति भूपतिः ॥ ६३ ॥ सोत्सुक्यं साचिवाद्युक्त–राज्यकार्याणि चिन्तयन् । उपविश्य क्षणं तत्र, पुनरुत्थाय याति च ॥ ६४ ॥ विमनस्कमिव ज्ञात्वा, नराधीशमथेङ्गितैः । कारणं तत्र जिज्ञासुः, कौतुकी सार्थनायकः ॥ ६५ ॥ वेश्यां कामपताकाख्यां, राज्ञश्चामरहारिणीम् । द्रव्यदानादिनावर्ज्यैत्यमाक्षीदेकदा रहः ॥ ६६ ॥ (युग्मम्) व्यसनं तु सुराज्ञोऽस्य, न किञ्चिदपि वीक्ष्यते । सदस्येत्ययमुत्सूरे, सत्वरोत्थाय यद्व्रजेत् ॥ ६७ ॥ भद्रे किं कारणं तत्र, जिज्ञासोर्मे वदाऽधुना । वेश्याऽवग् वेद्मि सार्थेश ! न सम्यगहमप्यदः ॥ ६८ ॥ परमन्तःपुरे श्रास्ते, वार्ता साम्प्रतमीदृशी । यत् क्रीडति स सुन्दर्या, जल्पतो भूभृदस्यया ॥ ६९ ॥ इत्यैव स सार्थेशो, विभिन्नः स्मरसायकैः यौवनद्रविणोन्मादा––देवं चेतस्यचिन्तयत् ॥ १७० ॥ हृदि स्फुरति या नारी, सदस्यस्यापि भूपतेः । लावण्यादिगुणैर्नूनं, सा भविष्यति कीदृशी ? ॥ ७१ ॥ निखिलं विफलं चैतद्धनयौवनजीवितम् । यावत्सुन्दरीं पावद्, तां न पश्यामि लोचनैः ॥ ७२ ॥ इत्यन्तः स्मरतप्तोऽपि, विधायाकारसंवरम् । हसन्नवज्ञयाऽवोचत्, सद्वृत्तां गणिकामिति ॥ ७३ ॥ अदृष्टान्यजना बाल्याद्, वराकी भूमिसद्मगा । विलासौचित्यनिपुणा, कामिनी सा न भाविनी ॥ ७४ ॥ अथ तां सुन्दरीं द्रष्टुं, जिज्ञासुर्भूमिसद्म तत् । राजसद्मनि सर्वत्राऽस्खलितो राजशासनात् ॥ ७५ ॥ त्रिलोकलच्छनैर्नैवं, भ्रमत्याग्नन् मुखं पदैः । एषोऽर्धग्रहिलो नृत्यन्, क्रामतीति विदुश्च तम् ॥ ७६ ॥ (युग्मम्) शुषिरासि-

स्यभिज्ञानात्, क्रमेण क्षितिसद्म तत् । विज्ञाय मुदितोऽनङ्ग–देवः सार्थपतिर्मनाक् ॥ ७७ ॥. अथात्मपुरुषैरात्मा—वासात्तद्गृहावधि । निःसन्निवीटकां धूर्त्तः, स सुरुङ्गामचीखनत् ॥ ७८ ॥ एकदा बहिरायाते, नरेन्द्रे स स्मरार्दितः । तत्रागात् स्फारशृङ्गारः, सुरुङ्गावर्त्मना रहः ॥ ७९ ॥ तेन तत्र रतिश्रान्ति–सुप्ता जागरिता शनैः । व्रीडितेव तदा सद्यः, सा ससम्भ्रमम्रुत्थिता ॥ १८० ॥ सुरूपं स्फारशृङ्गारं, मूर्त्तिमन्तमिव स्मरम् । तमालोक्याथ मुदिते—त्याख्यत् पातालसुन्दरी ॥ ८१ ॥ नवीनरूपनेपथ्यः, किं स्वामिन्नद्य वीक्ष्यसे ? । सोऽप्याख्यन्मृदुवाग् भद्रे !, नाऽहं राजा पतिस्तव ॥ ८२ ॥ सार्थेशोऽनङ्गदेवोस्मि, किन्त्वहं परमर्द्धिमान् । आकृष्टस्त्वद्गुणैराशां, पद्मिनीमिव षट्पदः ॥ ८३ ॥ आसेचनकरूपायाः, शुभेऽद्य तव दर्शनात् । ममाभूत्सफलः सद्य–श्चक्षुःसृष्टिपरिश्रमः ॥ ८४ ॥ इत्यादिमधुरालापै–स्तथावर्ज्य वशीकृता । यथाऽऽद्यदिन एवासौ, तेनाऽरंस्ताऽनुरागिणी ॥ ८५ ॥ स्थित्वा तत्र सुखं राजा–ऽऽगमनावसराऽवधि । सुरुङ्गाद्वारमाच्छाद्य, सार्थेशोऽगाद्यथागतम् ॥ ८६ ॥ दिने दिने तयोरेवं; वर्धमानानुरागयोः । ययौ समयवद्भोग–सौख्येन समयः कियान् ॥ ८७ ॥ अथाऽज्ञानवशाज्जातु, भूसद्मस्थस्य भूपतेः । अकस्मान्मा मुखे पत्त्वं, भुजङ्गस्येव मूषकः ॥ ८८ ॥ इतश्च चिकुरावद्धां, सा नृपाऽभावसूचिनीम् । वादयेद् घुर्घुरीं नित्यं, विरहाऽसहया तया ॥८९॥ (युग्मम्) अन्येद्युः सा तमप्राक्षी–दियत्येवास्ति भूरियम् । तत्कान्त कुत आयासि, क्व च यासीति मे वद ॥१९०॥ विहस्याह वणिक्कूप–मण्डूकीवासि वल्लभे ! । ग्रामाकरपुराद्यर्थैः, पृथ्वीं पृथ्वीं न वेत्सि यत् ॥ ९१ ॥ ततः कूपपुराराम–पुंस्त्रीहस्त्यश्वसङ्कुलाम् । भुवं चादीदृशत्तस्या, आलेख्य स महीपटे ॥ ९२ ॥ दर्शं दर्शं तदालेख्यं, दृष्टिपीयूषपारणम् । अतीवादृष्टकल्याणा, वराकी मोदते स्म सा ॥ ९३ ॥ आख्यचान्याहिताधान–निरतस्त्वमसि प्रिय ! ।

यदालोक्य ममाऽदृष्ट-वस्तून्येतान्यदीदृशः ॥ ९४ ॥ परं कथञ्चिदेतानि, साक्षाद् दर्शय जातु मे । मन्ये मदीयता स्वामिंश्चक्षुः-
साफल्यमात्मनः ॥ ९५ ॥ ततो निर्गच्छति क्ष्मापे, कर्हिचिद्राजपाटिकाम् । आनिनीत्समयज्ञस्तां, स गवाक्षं स्ववेश्मनः ॥ ९६ ॥
मूर्ध्नि मेघातपत्रेण, ध्रियमाणेन शोभितम् । पार्श्वयोर्वारनारीभिश्चाल्यमानोरुचामरम् ॥ ९७ ॥ भद्रजातीभमारूढं, सर्वाभरणभासुरम् ।
सेवितं मन्त्रिसामन्तै-श्चतुरङ्गबलैर्वृतम् ॥ ९८ ॥ राजवर्त्मनि गच्छन्तं, बन्धुघुष्टजयध्वनिम् । पुरतो वाद्यनादोऽच्च,
द्वात्रिंशद्बद्धनाटकम् ॥ ९९ ॥ कौतुकेनेव देवेन्द्रं, स्वर्लोकाद्भुवमागतम् । राजानं सा गवाक्षस्था, व्यलोकिष्ट सविस्मयम् ॥२००॥
( चतुर्भिः कलापकम् ) दध्यौ चेत्थमयं स्वैरं, स्वयं सर्वत्र सञ्चरन् । नानाक्रीडाभिराक्रीडा-दिषु क्रीडति सर्वदा ॥ १ ॥
कारागार इवावाल्या-न्निक्षिप्य क्षितिवेश्मनि । इयत्येव धरेत्यादि-वाक्यैर्वञ्चयते तु माम् ॥ २ ॥ ( युग्मम् ) परदुःखानभिज्ञोऽथ ।
दुःखाब्धौ मामिति क्षिपन् । मन्ये मम दुरात्मायं, पाश्चात्यभवशात्रवः ॥ ३ ॥ क्षीणयन्नपि भोगाङ्गी-र्दुखे मिष्टो विनष्टहृत् ।
दुर्जनश्चायमित्येषा, द्राग् व्यरज्यत भूपतौ ॥ ४ ॥ ( युग्मम् ) पाश्चात्यभवसम्बन्धी, सार्थेशो नन्वयं मम । चित्राश्चर्यमयीमेतां, यो
धरित्रीमदीदृशत् ॥ ५ ॥ सार्थेशः प्रीतिपात्रं मे, नाऽमेलिष्यदयं यदि । कृपणश्रीरिवामाप्स्यं, क्षितावेव क्षयं तदा ॥ ६ ॥
अनेनाचोऽक्षिगुहृदा, शुचिगुप्तिगृहाद्ततः । मोचिताऽस्मीति सार्थेशे, सा भृशं चान्वरज्यत ॥ ७ ॥ ( त्रिभिर्विशेषकम् ) अथ
भूगेहमापाता, रात्रि द्विष्टहृदप्यसौ । दम्भिनी विनयौचित्यं, बहिर्वृत्त्या सदाऽतनोत् ॥ ८ ॥ जीवत्यस्मिन्न मे मुक्ति-र्भाविनी
भूगृहादतः । इति दुष्टाशयाऽन्येद्युः, पापा पातालसुन्दरी ॥ ९ ॥ ददौ विषेण संस्कृत्य, बीजपूरं महीभुजे । तत्स्वादादाकुलीभूतः ।
सोऽपि द्राग् पतितायथौ ॥ २१० ॥ (युग्मम्) सिक्तः शुक्तिजलेनाशु—नरैः स्वस्थोऽभवन्नृपः । तद्वयलक्षिं तु स स्नेहान्नाशङ्किष्ट मनाग्

हृदि ॥११॥ अव्यापन्ने तथा राज्ञि, सत्रोपायान्तरादपि । भूपहान्मुक्तिमिच्छन्ती, सार्थेशमिदमब्रवीत् ॥१२॥ निमन्त्रयस्व राजानं, भोजनाय त्वमेकदा । तत्समक्षमहं कुर्वे, येन प्रतिकृतिं प्रिय ! ॥ १३ ॥ सोऽप्याख्यद् देवि ! राजानं, निमित्तेन विना कथम् । निमन्त्रये न यद्हास्य-मप्येति कुतुकादृते ॥ १४ ॥ साऽप्यवग् मासमेकं हि, कपटेनाऽपटूभव । ततो निमन्त्रयस्वाशु-मुल्लाघस्नानहेतुना ॥ १५ ॥ प्रेमपाशनिबद्धात्मा, चलन्नेप तदाज्ञया । प्रतिपेदे तथेत्येतत्, तथैवाऽपटूत्वभूत् पुनः ॥ १६ ॥ तदा विराहेतं विघ्नभूतया नृपसेवया । पातालसुन्दरीभोगं, मुदितः सोऽप्यमंस्त च ॥ १७ ॥ आह्वयेद्भिषजो जात्वौषधान्याना-ययेत् पुनः । आयान्त्यारोग्यपृच्छायै, नागराश्चास्य वेश्मनि ॥ १८ ॥ कियद्भ्यो दिवसेभ्योऽयं, सार्थेशोऽस्त्यपटुर्मनाक् । प्रवृत्तिरिति सर्वत्र, प्रावर्तत जनेषु च ॥ १९ ॥ ततो मासे व्यतिक्रान्ते, सार्थेशः शुभवासरे । उल्लाघस्नानमातेने, नानावर्धा-पनोत्सवैः ॥ २२० ॥ परिधाय सुवस्त्राणि, कृतदेवगुरुस्मृतिः । ततो राजकुले गत्वा, स राजानं व्यजिज्ञपत् ॥ २१ ॥ पटूभूतोऽस्मि ते राजन्, प्रसादेन ततोऽधुना । भुक्त्यै मद्गेहमागच्छ, प्रसद्याऽनुगृहाण माम् ॥ २२ ॥ समस्तराजायतने-ष्वस्य मान्यस्य भूपतिः । दाक्षिण्यादनुमेनेऽथ, तद्भोजननिमन्त्रणम् ॥ २३ ॥ ततः सार्थपतिर्हृष्टो, मण्डपं निजवेश्मनि । दुकूलैर्विपुलं पञ्च-वर्णंहृद्यमचीकरत् ॥ २४ ॥ स सप्तदशधाभोज्य-मथाष्टादशशाकयुक् । प्रगुणीकृत्य पाताल-सुन्दर्यै द्राग् न्यवेदयत् ॥ २५ ॥ साप्यवोचन्नृपस्याय, करिष्ये परिवेषणम् । सोऽप्यवक् सभयोत्कम्पं, त्वां ज्ञास्यति नृपो यदि ॥ २६ ॥ तत्सर्वस्वापहारेण, मां नूनं मारयिष्यति । साप्याह मरणाद्बिभ्यन्, सत्यस्त्वमसि वाणिजः ॥ २७ ॥ मदाज्ञामन्यथा कुर्वन्नपि मूढ ! मरिष्यसि । ततस्तां कुपितां ज्ञात्वा, सभयं सोऽप्यवक् पुनः ॥ २८ ॥ इदमुक्तं मया देवि !, हास्येनैवेति मा कुपः । यत्त्वदाज्ञावशस्ये-

पनान्यथावर्ति मे मनः ॥ २९ ॥ ततो गुप्ताध्वना तेन, हृष्टा पातालसुन्दरी । आययौ स्फारशृङ्गारा, सार्थवाहस्य
सद्मनि ॥ २३० ॥ सगौरवमथाहूतः, सामन्तसचिवैः समम् । सार्थेशावासमागत्य, राजा भोक्तुमुपाविशत् ॥ ३१ ॥
प्रिये ! राजस्त्वमेवाद्य, कुरुष्व परिवेषणम् । सार्थेशेनेत्यमादिष्टा, सद्यः पातालसुन्दरी ॥ ३२ ॥ कुलबालेव
सव्रीडं, तन्वती परिवेषणम् । भुञ्जानस्य नृपस्याग्रे, यात्यायाति पुनः पुनः ॥ ३३ ॥ ( युग्मम् )
तामथालोक्य भूपाल-श्चकितोऽचिन्तयद् हृदि । मत्पत्नी कथमत्रागादियं पातालसुन्दरी ? ॥ ३४ ॥ साऽथवा कथमत्रैति,
तस्मात् पातालसद्मतः । किन्तु तुल्याकृतिस्तस्या, इयमस्यैव गेहिनी ॥ ३५ ॥ तथापि भूमिसद्मान्तः, सद्यो गत्वा विलोकये
अन्यथा मम न स्वास्थ्यं, यत्सरिष्यति सर्वथा ॥ ३६ ॥ उत्सुकोऽप्ययमुर्वीश-स्तद्गेहे लोकलज्जया । वेष्टिकृत्यमिवातेने, भोजनं
मनसा विना ॥ ३७ ॥ ततोत्सुकमथालोक्य, सार्थेशो नृपमित्यवक् । किमौत्सुक्यमिदं नाथ !, क्षणं विश्राम्यतामिह ॥ ३८ ॥
ध्यप्रत्वाद्राज्यकार्याणां, विलम्बः क्षमते न मे । इत्युक्त्वा त्वरितं यावद्याति भूमिगृहे नृपः ॥३९ ॥ तावत्प्रागेव पाताल-सुन्द-
र्यागत्य भूगृहे । गुप्तद्वारं पिधाय द्राक्, सुप्ता कपटनिद्रया ॥ २४० ॥ मुद्राङ्कितमथोद्घाट्य, भूसद्मान्तर्गतेन सा । व्यलोकि
भूभुजा सुप्ता, शनैरुत्थापिता पुनः ॥ ४१ ॥ उत्तस्थौ कुर्वती जृम्भाः, सद्यः साऽपि ससम्भ्रमम् । आगच्च विनयौचित्य-
मातनोत् यथाविधि ॥ ४२ ॥ राजाप्यनन्यनेपथ्य—परिधापनपूर्वकम् । सम्यग्विलोकमानोऽपि, नाऽज्ञासीत्किञ्चिदन्त-
रम् ॥ ४३ ॥ भूगृहे यत्र सर्वत्र, प्रचारो मरुतोऽपि न । यातायातं कथं नाम, तत्र सम्भवति स्त्रियाः ? ॥ ४४ ॥ इतिव्यप-
गताशङ्क-श्चिन्तयामासिवानिदम् । भ्रमेण हा मया पापं, मुधैव कियदर्जितम् ! ॥ ४५ ॥ नूनमेतत्सदृग्रूप-लावण्या सा
वणिक्प्रिया । सदृशा सदृशी पृथ्वी, लोकोक्तिरिति यत्पुरा ॥ ४६ ॥ ततो विशिष्य रागान्धः, स तां मेने महासतीम् ।

दृष्टानपि सतो दोषान्, मन्यन्ते न हि रागिणः ॥ ४७ ॥ ततो मासे गते वाढ-मुद्विग्ना भूगृहस्थितेः । पातालसुन्दरी सार्थ-पतिमुक्तवती रहः ॥ ४८ ॥ सद्यः संवृणु वाणिज्यं, देयलभ्यविशो धनात् । संगृहाण च सत्पोतान्, यथा यावोऽन्यनीवृति ॥ ४९ ॥ कृत्वाथ प्राभृतं प्रौढं, प्रसादाय नराधिपम् । निजानुगमनं चास्मा-द्याति स्वाब्धितटावधि ॥ २५० ॥ तद्वाक्यादथ सार्थेशः, सामग्रीं सकलां व्यधात् । प्रौढोपायनहस्तश्च, नृपं नत्वा व्यजिज्ञपत् ॥ ५१ ॥ तव सौम्यदशा राजन्नत्र स्थितवता मया । आर्जितं विपुलं द्रव्यं, सर्वत्रापि च सद्यशः ॥ ५२ ॥ महाकारणवाच्यश्च, पितुर्लेखोऽधुनागमत् । तन्मां प्रभोऽनुमन्यस्व, स्वपित्रोर्मिलनोत्सुकम् ॥ ५३ ॥ राजाप्युवाच सार्थेशो, वदान्यो विनयी नयी । चित्तज्ञः परमप्रीति-पात्रं मित्रं ममासि यत् ॥५४॥ उत्कण्ठितमनाः पित्रो-स्तत्त्वं गच्छन् स्वनीवृतम् । प्रार्थय स्वेप्सितं किञ्चि-न्नानुमंस्येऽन्यथाऽन्वहम् ॥ ५५ ॥ सार्थेशोऽवग् न मे न्यूनं, त्वत्प्रसादेन किञ्चन । तथापि यदि तुष्टोऽसि, विभो सेवकवत्सल ! ॥ ५६ ॥ राजन्नब्धितटं यावत्तन्मां संप्रेषय स्वयम् । यन्मे देशविदेशेषु, प्रसिद्धिरियता भवेत् ॥ ५७ ॥ ओमिति प्रतिपद्यैतत्, सार्थेशमवदन्नृपः । चलनावसरः स्वस्य, ज्ञापनीयो वयस्य ! मे ॥ ५८ ॥ इति भूपगिरा प्रीत-मनाः सार्थपतिस्ततः । सर्वं पातालसुन्दर्यै,, भूगृहे तन्न्यवेदयत् ॥ ५९ ॥ अथ भृत्वा तदादेशात्, सर्वान् पोतान् क्रयाणकैः । स सुखासनमासीनो, निजावासाद्धि निर्ययौ ॥ २६० ॥ सार्थेशचलनं ज्ञात्वा, यावत्तत्रागमन्नृपः । प्रस्तावज्ञा च साप्यागात्, तावत्पातालसुन्दरी ॥ ६१ ॥ नृपसार्थेशयोस्तत्र तदा वर्त्मनि गच्छतोः । पृष्ठे सुखासनासीना—ऽचलत्पातालसुन्दरी ॥ ६२ ॥ साप्याह पथि राजान-मपराद्धं तवात्र यत् । मद्वर्गा तत्क्षमस्वाथ, स्वामिन् ! जातु स्मरेश्च तम् ॥ ६३ ॥ अथावलोक्य तां दध्यौ, नृपः साशङ्कमानसः । सैवेयं मत्प्रिया

नूनं, यात्यनेन समं हहा ॥ ६४ ॥ मुधा नाऽचिन्ति हा दुष्टं, यदेषा तत्समाकृतिः । परिवेषणकृत् पूर्वं, निर्णीतास्यैव गेहिनी
॥ ६५ ॥ भूपश्चान्येकदा तत्र, गत्वा वीक्षे तथापि ताम् । चल्मानोऽर्धमार्गात्तु, लज्जे लोकेषु साम्प्रतम् ॥ ६६ ॥ परं संप्रेष्य
पाथोधि-कूले सार्थपतिं द्रुतम् । पश्चात्त्वागत्य विक्षिप्ये मनःस्वाध्याय तां प्रियाम् ॥ ६७ ॥ अथायाते तटे सार्थवाहो-नुज्ञाप्य
भूपतिम् । आरोहत्सह पाताल-सुन्दर्या वाहनं रयात् ॥ ६८ ॥ गन्तव्यं मन्दिरं राजा-दिष्वनेन यदोच्यत । अचीचलच्च वेगेन,
पोतानन्यत्र तत्पथात् ॥ ६९ ॥ पश्चादागत्य राजापि, सद्यो भूगेहमैक्षत । शून्यं पातालसुन्दर्या, गमनापद् ददर्श च ॥ २७० ॥
मुषितो हाऽस्मि धूर्तेन, तेनैवं पर्पयन् करौ । मन्त्र्यादीनामवक् चाप्यं, पत्नीवृत्तान्तमादितः ॥ ७१ ॥ हतेयं वणिजा तेन,
कथं भूमिगृहादिति । विस्मयास्तहः भूपेन, ययुस्ते भूमिसद्म तत् ॥ ७२ ॥ ते निस्तुपस्था तत्र, पश्यन्तो सुरङ्गवीथिकाम् । सुरङ्गां
ददृशुः सार्थ—वाहीकश्च ययुस्तथा ॥ ७३ ॥ शून्यमालोक्य तत्सद्म, राजा कोपारुणेक्षणः । तं दुरात्मानमावध्या-
नयतेत्यादिशद् भटान् ॥ ७४ ॥ अहो देशान्तरीयस्य, वणिजोऽस्य कलाऽद्भुता । अज्ञाताऽस्माकमप्येषा, हृता येन
नृपप्रिया ॥ ७५ ॥ इत्यन्तर्विस्मितैर्मन्त्रि—सामन्तसुभटैर्वृतः । अधाविष्टात्मनाऽप्युग्र—कोपः सार्थेशपृष्ठतः ॥ ७६ ॥
आगतोऽब्धितटे सद्यः, शून्यमालोक्य तन्नृपः । पत्नीप्रेमनिबद्धात्मा, नाविकानिदमादिशत् ॥ ७७ ॥
प्रगुणीकृत्य रे पोतान्, समुद्रं चलत द्रुतम् । तेऽप्यूचुरधुनाऽत्राब्धि—योग्याः पोता न सन्ति नः ॥ ७८ ॥ पश्चाच्छन्
सार्थवाहस्तान्, जग्राह महतोऽखिलान् । विलक्षास्यस्ततो राजा, सान्तर्बाष्पमचिन्तयत् ॥ ७९ ॥ रूपेणातिरतिं मेऽद्य
हृता जीवितेश्वरीम् । किञ्चिन्नाऽमोचि धूर्तेन, तेन पापीयसा हहा ! ॥ २८० ॥ अहमन्यनरे· भर्तृ—विनयौचित्यवेदिनि ! ।

९

किमु कार्पणिना तेन, वणिजा यत्सहाऽगमः ? ॥ ८१ ॥ पातालादपि निर्गत्य, श्रीर्निष्पुण्यनृणां यथा। स्वयं याति
ममाऽपुण्ये-स्तथा नुन्ना त्वमप्यगाः ॥ ८२ ॥ अद्यप्राऽविनये चन्द्र-वदने मंजुभाषिणि ! । द्रक्ष्यसे क च हा देवि !,
हत दैवविषोजिता ॥ ८३ ॥ प्रलपन्तमिति क्ष्मापं, सामन्तसचिवा जगुः । गतं मृतं विनष्टं वा, न स्वामिन् शोच्यमुत्तमैः ॥ ८४ ॥
संयुज्यन्ते वियुज्यन्ते, कर्मणा जीवराशयः । मेरिताः पवमानेन, पर्णपुञ्जा इव मभो ! ॥ ८५ ॥ किञ्च-अर्थक्रयाणकं पत्नी,
तत्कृते प्रलपन् पुनः । हास्यास्पदं सदोदार-चरित्रेषु भविष्यसि ॥ ८६ ॥ अथात्राऽवसरे नत्वा, कुमारा विमलाशयाः ।
सहास्यविस्मयोल्लास-मिति तातं व्यजिज्ञपन् ॥ ८७ ॥ साक्षादपीक्षितानस्या, दोषानेवं गुणान्नृपः । मन्यते कुशलोऽप्यत्र, तात
किं नाम कारणम् ? ॥ ८८ ॥ अनिर्विण्णमनाः सर्व-जन्तूपकृतिकर्मणि । संशयध्वान्तविध्वंसी, प्रभुरप्यवदत्तदा ॥ ८९ ॥
विवेकदशमाहन्वन्, विडम्बन् दुर्यशो जने । निविडो राग एवैको, ज्ञातव्यस्तत्र कारणम् ॥ २९० ॥ रत्ता पिच्छंति गुणा,
दोसे पिच्छंति जे विरज्जन्ति । मज्झत्था विं य पुरिसा, गुणे य दोसे य पिच्छन्ति ॥ ९१ ॥ यतः— सा मित्रं सचिवः
सैव, सा तत्त्वं जीवितं च सा । सा सर्वस्वस्वामिनी सैव, सैव देवो गुरुश्च सा ॥ ९२ ॥ दिवारात्रौ च सर्वत्र, सा सैव
स्त्रीवशात्मनाम् । महतामपि हा चित्तं, विचाराद्भ्रश्यति ध्रुवम् ॥ ९३ ॥ ( युग्मम् ) योषितो निखिलं सद्म, समर्प्य
धनधान्ययुक् । दासवद्धन्त चेष्टन्ते, रागान्धमनसो जडाः ॥ ९४ ॥ रागान्धः स्त्रीवशात्मानः, सुविपोऽपि शुभाशुभे । विवेक्तु-
मक्षमास्तत्र, वहुधान्यो निदर्शनम् ॥ ९५ ॥ तथाहि-सीमान्तनगरस्थायी, रेवाया दक्षिणे तटे । ग्रामकूटो वहुद्रव्यो,
वहुधान्याऽभिधोऽभवत् ॥ ९६ ॥ ऋजुः पतिव्रता भक्ता, तस्याद्या सुन्दरी प्रिया । कुटिलप्रकृतिश्चाभूत्, कुरङ्गी कुलश

मिया ॥ ९७ ॥ कुरङ्गयाः सह रागान्धः, सदा विलसती स सः । पृथक् चक्रे च मूढात्मा, वृद्धां भक्तिमतीं सतीम् ॥ ९८ ॥
गृहाङ्गणी तथा धेनू-र्दासदास्यौ च हालिकौ । सम सोपस्कर चाम्याः, पार्थक्ये पतिरार्पिपत् ॥ ९९ ॥ भुञ्जानः काङ्क्षितान्
भोगान्, स कुरङ्गया विमोहितः । न कालं वेद गच्छन्तं, वारुण्येव मदातुरः ॥ ३०० ॥ विलासहासकुशलां, तामाप्य नर-
वीरनाम् । पौलोम्यालिङ्गितं शक्रं, स मेने नात्मनोऽधिकम् ॥ १ ॥ देशेशेनान्यदाहूय, भणितो यज्ञधान्यकः । सामग्रीमु-
चितां कृत्वा, स्कंधावारे चल द्रुतम् ॥ २ सोऽपि नत्वा चलामीति, निगद्य गृहमागतः । कुरङ्गीं गाढमालिङ्ग्य, सस्नेह-
मिदमूचिवान् ॥ ३ ॥ स्कन्धावारेऽद्य गन्तव्य, त्वां विमुच्य गृहे मया । प्रचण्डशासनः स्वामी, यत्कुप्यत्यन्यथा मयि ॥ ४ ॥
आकर्ण्येति वचस्तन्वी, सा बभाषे विषण्णधीः । अहमप्यागमिष्यामि, जीवितेश ! त्वया सह ॥ ५ ॥ सुखेन शक्यते सोढुं,
ज्वालामालाकुलः शिखी । वियोगो न पुनर्नाथ !, नित्यं सन्तापयंस्तनुम् ॥ ६ ॥ ग्रामकूटस्ततोऽवादीत्, सत्यमेतन्मृगेक्षणे ।
तथापि तिष्ठ मा कार्षी-स्त्वं सहागमने मनः ॥ ७ ॥ यत्त्वां जातु नृपोऽन्यस्त्री-लम्पटो वीक्ष्य मा ग्रहीत् । स्त्रीरत्नमीदृशं दृष्ट्वा,
कथं मुञ्चति शक्तिमान् ॥ ८ ॥ कुरङ्गीमिति सम्बोध्य, समर्प्य धनधान्ययुक् । सम शास्यै ययौ स्कन्धा-वारे द्राग् यज्ञधा-
न्यकः ॥ ९ ॥ पत्यौ गतेऽथ भुञ्जाना, नानाभोगान् विटैः समम् । यत्र तत्रापि निःशङ्कं, स्वैरिणी विजहार सा ॥ ३१० ॥
विटानुपरन्ती सा, नानावस्त्रादानादिभिः । अचिराद्धनधान्याद्यैः, रिक्तं कृतवती गृहम् ॥ ११ ॥ स्कन्धावारादथासन्न-माप्त-
माकर्ण्य तत्पतिम् । निर्विलुप्तसर्वस्वा, सा भयेन व्यमुच्यत ॥ १२ सतीनेपथ्यमाधाय, सव्रीडा सदने तदा । सापि स्थित-
वती गौणां, वञ्चना सहजा यतः ॥ १३ ॥ आगच्छन्नेव सोऽप्याशु, स्मरादेशवशंवदः । भाजिनाय पुरस्कृत्य, कुरङ्गीसदने

नरम् ॥ १४ ॥ कुरङ्गीमित्यवक्सोऽपि, समागात्त्वत्पतिः शुभे ! । संस्कुरुष्व वरं भोज्यं, येन सोऽत्राद्य भोक्ष्यते ॥ १५ ॥ सोऽ-
नुरागात्तव मैत्री-दिदमाख्यातुमेव माम् । तं चोवाच तदा सापि, कुलटा कपटे पटुः ॥ १६ ॥ ज्यायसीं प्रेयसीं तस्य, भद्रेदं
वद येन सः । भोक्ताद्य तद्गृहे यत्र, युज्यते क्रमलङ्घनम् ॥ १७ ॥ ततस्तेन सहागत्य, सुन्दरीं साऽवदत् स्वसः ! । कुरु भोज्यं
परं भर्ता, भोक्ता ज्यायो गृहेऽद्य यत् ॥ १८ ॥ सुन्दर्याख्यात् करिष्यामि, नानारसवतीमहम् । परं कुरङ्गि ! ते भर्ता, न मत्सद्मनि
भोक्ष्यते ॥ १९ ॥ ईषद्विहस्य साऽप्यूचे, मामिष्टां चेतसि मंस्यते । तदात्र भोक्ष्यते नूनं, सद्यो भोज्यं कुरूचितम् ॥ ३२० ॥
कुरङ्गीवचनादस्मात्, सुन्दरी सत्वलालसया । द्राक् संस्कृतवती सारं, भोज्यं षड्रससमञ्जुलम् ॥ २१ ॥ ग्रामकूटोऽथ सोत्कण्ठः,
कुरङ्गीगृहमाययौ । तद्रिक्तमपि सम्पूर्णं, धनधान्यैरमंस्त च ॥ २२ ॥ तस्याथ तदीयौको-द्वारेऽध्यास्य चतुष्किकाम् । ऊचे च
भोजनं देहि, दयिते ! त्वरिता भव ॥ २३ ॥ साप्याख्याद् भ्रकुटीं कृत्वा, भुङ्क्ष्व दुष्टमते ! व्रज । स्वमातुर्भवने तस्या, यस्याः
प्राग् ज्ञापितं त्वया ॥ २४ ॥ सुन्दर्या ज्ञापयित्वा तत्, स्वयं तस्मै चुकोप सा । योजयन्ति निजे पत्यौ, स्वं दोषमिति हा स्त्रियः
॥ २५ ॥ इति तस्यां सकोपायां, संकोच्य सकलं वपुः । स तस्थौ सभयोत्कम्पो, मार्जारीमिव मूषकः ॥ २६ ॥ आगच्छ
भुङ्क्ष्व तातेति, सुन्दरीतनयेन सः । मुहुः सादरमाहूतो-ऽप्यास्थान्मूक इव क्षणम् ॥ २७ ॥ पाखण्डं किं त्वयारब्धं, खाद
याहि प्रियागृहम् । इत्युक्तश्च तया भीतः, स सुन्दर्या गृहं गतः ॥ २८ ॥ आयातस्याथ तस्याशु, वरासनमढौकयत् । पुरश्च
कनकस्थालं, भोजनाय न्यवेशयत् ॥ २९ ॥ नानाभोज्यं च सुस्वादु, सुन्दरी पर्यवेशयत् । रागान्धः स मनःशून्य, इव भुङ्क्ते
तथापि न ॥३३०॥ ( युग्मम् ) चित्ते च चिन्तयत्येवं, स स्मराज्ञावशंवदः । कुरङ्गी किंप्रियं रुष्टा,-मम प्राणप्रियाऽधुना ? ॥ ३१ ॥

मेमार्द्रया दृशा यावत्, कुरङ्गी मां न पश्यति । स्थले जलचरस्येव, तावन्मे न रतिः क्वचित् ॥ ३२ ॥ अप्सरोजित्वरसौभाग्यां,
सर्वाश्चर्यकारिणीम् । विनीतामनुनेष्येऽहं, कथं तां जीवितेश्वरीम् ? ॥ ३३ ॥ इत्युर्ध्वीकृत्य वदनं, स च्छाग इव तस्थिवान् ।
ऊचे परिजनेनार्य, स्वामिन् किमु न जेमसि ? ॥३४॥ स जगौ किन्तु जेमामि, न किञ्चिज्जेमनोचितम् । तत्कुरङ्गीगृहात्किञ्चिद्–भो-
ज्यमानीयतां मम ॥ ३५ ॥ इति भर्तृवचः श्रुत्वा, सुन्दरी सरलाशया । गत्वा च सदने सद्यः, कुरङ्गीमित्यभाषत ॥ ३६ ॥
देहि भोज्यं शुभे किञ्चित्पत्युर्भोजनोचितम् साप्यवादीन्मया नाऽद्य, स्वसः ! किञ्चिदपच्यत ॥ ३७ ॥ गोमयं स मया दत्तं,
भर्ता यदि भक्ष्यते यदि । तन्मे सहिष्यते सर्वं, दूषणं सोऽतिरक्तहृत् ॥ ३८ ॥ चिन्तयित्वेति सद्यस्कं, कदोष्णं गोमयं तदा ।
उत्सूनैकिरणोपूर्णं, जुगुप्साहं घृद्दयम् ॥ ३९ ॥ आनीय भोजने क्षित्वा, सुन्दर्यां द्राक् समार्पयत् । गृहाण जेमनमिदं, भर्तुरेयं
निगद्य सा ॥ ३४० ॥ (युग्मम्) सुन्दर्यानीय तद् दत्तं, स मूढः सर्वमाहरत् । कुरङ्गीमहितत्वेन, जानानः
परमामृतम् ॥ ४१ ॥ किमेतदद्भुतं रागी, गोमयं यदभुङ्क्त सः । स स्त्रीजघनवक्त्रस्थ–मशुच्याद्यपि स्वादति ॥ ४२ ॥
गोमयं केवलं भुक्त्वा, शालायां स निविष्टवान् । सादरं विमममासीत्, कुरङ्गीकोपकारणम् ॥ ४३ ॥ ज्ञातपूर्वी स तद्वृत्तं,
द्विजः प्राह मत्सरम् । कुरङ्गी भद्र ! ते गेहे, साक्षात्तिष्ठति वैरिणी ॥ ४४ ॥ मिलित्वा यद्विटैः सार्धं, स्वस्य शीलं कुलं
धनः । त्वद्गेहस्य धनं चैषा, युगपद्द्राग्व्यनीनशत् ॥ ४५ ॥ धनं चैवं तवाऽहार्षीद्, या पापा स्वैरचारिणी । हरन्ती वार्यते
केन, सा जातु तव जीवितम् ? ॥ ४६ ॥ निशम्येति वयस्यस्य, परिणामहितैषिणः । स गत्वा कथयामास, कुरङ्ग्याः सकलं
कृतीः ॥ ५७ ॥ साप्यगोचदनात्मज्ञः, स्वामिन्नेष द्विजोऽन्यदा । मच्छीलं शेषशीर्षस्थ–रत्नवद्धर्तुमुद्यतः ॥ ४८ ॥ निषिद्धश्च

मया दूनो, दोषानाख्याति ते पुरः । तदेष सगृहाऽनर्हो, दूरं निर्द्धार्यतां प्रभो ! ॥ ४९ ॥ अतथ्यमपि तद्वाक्यं, तथ्यमेव विदन् कुधीः । रागान्धः स निराचक्रे, परिणामहितं द्विजम् ॥ ३५० ॥ कुरङ्गी कुलटाचारा, कुटिलाप्यस्य दुर्मतेः । अभवत् परमप्रीति-पात्रं धिग् रागजृम्भितम् ॥ ५१ ॥ (युग्मम्) युष्मभ्यं रागमाहात्म्य-मित्थं वत्सा मयोदितम् । अथ प्रस्तूयमानं च, प्रस्तुतं शृणुताऽधुना ॥ ५२ ॥ किं करोमि क्व गच्छामि, कथमाप्स्यामि वा प्रिया ? । इति ध्यायन्नृपोऽश्रौषीन्मधुरं दुन्दुभिध्वानम् ॥ ५३ ॥ कुतोऽयं मधुरध्वान, इति विस्मितमानसः । गच्छंस्तदनुसारेण, नृपः सामन्तमन्त्रियुक् ॥ ५४ ॥ क्रियमाणोत्सवं देवैस्तत्कालोत्पन्नकेवलम् । स्वर्णाब्जासीनमालोक्य, मुनिं नत्वा च पृष्टवान् ॥ ५५ ॥ सदा स्मितमुखी रूपे-णातिरम्भा पतिव्रता । पातालसुन्दरी स्वामिन्, मिलिष्यति कदा मम ? ॥ ५६ ॥ प्रतिबोधयितुं नृपं, सोऽप्यवग् रागविह्वलम् । राजन् जन्मान्तरेऽप्येषा, मिलिष्यति न जातु ते ॥ ५७ ॥ तज्जगामैव हा नूनं, मम सा जीवितेश्वरी । विषीदन्तमिति क्ष्मापं, केवली पुनरब्रवीत् ॥ ५८ ॥ राजन् शोचसि किं याता-मिमां प्रत्यक्षराक्षसीम् । यादेयं स्वयमुत्तीर्णा, तव शृङ्गेण शृङ्खला ॥ ५९ ॥ सरस्येषा तदा बीज-पूरं यद्विपयुग् ददौ । तेनाभूराकुलः किन्तु, चरमाङ्गीति नाऽमृथाः ॥ ३६० ॥ परिवेषण-वेलायां, वञ्चितोस्यनया पुनः । अनुज्ञाप्य च गच्छन्त्या, लोके हास्यास्पदीकृतः ॥ ६१ ॥ इत्यादिदुष्कृतान्यस्याः साक्षाद्वीक्ष्यापि रक्तधीः । विमुह्यसि किमद्यापि, राजन् किञ्चिन्न बुध्यसे ॥ ६२ ॥ अपि च-गृहे यास्यति यस्यैषा, कालरात्रिरिवाङ्गिनी । तस्यापि सुमहाकष्ट-दायिनी हन्त भाविनी ॥ ६३ ॥ तथा नैमित्तिकप्रोक्त-वाक्यसंवादहेतवे । पुरो भाविनमेतस्याः, सम्बन्धं शृणु भूपते ! ॥६४॥ सार्थेशानङ्गदेवेन, समं पातालसुन्दरी । षण्मासावधि सस्नेहं, नानाद्वीपेषु रंस्यते ॥६५॥ अथास्ते गीतशास्त्रेषु, कुशलो मधुरस्वरः ।

काणः सार्थपतेर्मित्रं, सुकण्ठ इति विश्रुतः ॥ ६६ ॥ तेन देवरसम्बन्धि, तन्वती नर्म साऽनिशम् । स मन्मथविकाराणि, जातु वाक्यानि वक्ष्यति ॥ ६७ ॥ स्वच्छन्दप्रकृतिर्लब्ध-प्रसरा सा ततोऽधिकम् । रहः सह सुकण्ठेन, रंस्यतेऽपि शनैः शनैः ॥ ६८ ॥ नूनं जीवति सार्थेशे, सुकण्ठेन समं मम । स्वच्छन्दसुरतक्रीडा-सुखं भावि न कर्हिचित् ॥ ६९ ॥ कथञ्चित्तेन हन्येत-मिति ध्यास्यति सा हृदि । कृतघ्नप्रकृतिः पापा, सार्थेशेऽप्युपकारिणि ॥ २७० ॥ (युग्मम्) ततश्च तनुचिन्तायै, पोतप्रान्तगतं शनैः । सा क्षेप्स्यति तमम्भोधौ, विश्वस्तमनसं निशि ॥ ७१ ॥ दूरं गतेषु पोतेषु, पूत्करिष्यति मायया । सा च श्यामसुखीभूय, नाविकानिति वक्ष्यति ॥ ७२ ॥ गतः शरीरचिन्तायै, निष्पुण्यायाः पतिर्मम । अधुनैव पपाताब्धौ, किञ्चिद्विस्खलितक्रमः ॥ ७३ ॥ तत्पोतान् स्थापयित्वात्र, सद्यः प्राणप्रियं मम । वीक्षध्वं कर्षयित्वे च, दास्यामि मनसोऽर्थितम् ॥ ७४ ॥ नाविका अपि सोत्साहं, वीक्षमाणास्तमम्बुधौ । न हि रत्नमिवाप्स्यन्ति, दूरभ्रष्टतया पुनः ॥ ७५ ॥ जीवितेश्वर हा नाथ हा हा हृदयवल्लभ ! । आशाविश्राम हा कुत्र, द्रक्ष्यसे रूपमन्मथ ! ॥ ७६ ॥ अकस्मात्किमु मुक्तास्मि, त्वदेकशरणा प्रिय ! । इति मायविनी मिथ्या, तदा सा विलपिष्यति ॥ ७७ ॥ ( युग्मम् ) प्रीतिपात्रं मिथो यावन्नातिदूरं प्रयास्यती । तावत् पृष्ठे निपत्याब्धौ, तस्य स्यां सहचारिणी ॥ ७८ ॥ इत्यम्भोधिनिपाताय, मिथ्या परिकरं दृढम् । यावद्भ्रक्ष्यति सा तावत्, पोतलोको वदिष्यति ॥ ७९ ॥ अकस्मादेव किं देवि !, त्यक्तनाथास्ततोऽपि नः । दैवात्सार्थपती याते, सार्थेशाऽनुभराधुना ॥ २८० ॥ इत्युक्तं सार्थिकैः सापि, मौनेनैवानुमंस्यते । इष्टं वैद्योपदिष्टं च, सुरैतथ्यादि जानती ॥ ८१ ॥ सम्भूय सार्थिकैरेषा, ततः सार्थपतीकृता । चालयन्ती पुरः पोतान्, नानाद्वीपेषु यास्यति ॥ ८२ ॥ दानमानादिना सार्थ-जनानावर्जयिष्यति । निःशङ्का रंस्यते स्वैरं, सुकण्ठेन समं

न सा ॥ ८३ ॥ क्रमेणेङ्गितवेदित्वात्, सुकण्ठोऽपीति वेदिता । यन्नूनमम्बुधौ क्षिप्तः, सार्थेशः पापयाऽनया ॥ ८४ ॥
युवानौ धनिनौ रूप-सौभाग्यौदार्यशालिनौ । भृशानुरक्तमनसौ, क्षितिभुक्सार्थनायकौ ॥ ८५ ॥ सारालङ्कार-
दानाद्यै-र्बहुधोपकृताऽप्यसौ । दुर्जनप्रकृतिः पापा, कृतघ्ना मुमुचे यदि ॥ ८६ ॥ जनमात्रस्य तद्रूप-लावण्यविकला-
कृतेः । निर्धनस्य ममात्मीया, सर्वथा न भविष्यति ॥ ८७ ॥ ( त्रिभिर्विशेषकम् ) इयं कर्णान्तलक्ष्मीव, गृह्णतो
मुञ्चतोऽपि मे । भाविनी चाऽचिरादेव, महाऽनर्थाय पापिनी ॥ ८८ ॥ एवं विदितदोषत्वात्, सुकण्ठोऽपि विरक्तहृत् ।
तया समं यदृच्छया, रंस्यते पटुचाटुमान् ॥ ८९ ॥ अयं सार्थपतिः, पुण्यैः फलकं प्राप्य वारिधौ । तरन् कतिपयै-
र्घस्रैः, सिंहलद्वीपमाप्स्यति ॥ ३९० ॥ तत्र मिष्टजलैर्नाना-फलैश्चातिपचेलिमैः । स्वस्थीभूतवपुर्यैवं, चिन्तयिष्यति चेतसि ॥९१॥
एकान्तेनानुरक्तोऽपि त्यागी भोगी श्रियां निधिः । प्राप्तोऽहं दुरवस्थां हा, कीदृशीमनयाऽधुना ॥ ९२ ॥ सा प्रीतिस्तानि
चाटूनि, तान्यौचित्यादिसत्क्रियाः । सर्वमेकपदे हन्त, नाशितं पापयाऽनया ॥ ९३ ॥ स्वशीलकुलमालिन्यं, जने च वचनीय-
ताम् । न यामजगणं मूर्ख-स्तस्या वृत्तमिदं च हा ! ॥ ९४ ॥ यो दर्शनिशि सङ्ख्यातु-मीष्टे निखिलतारकान् । स्त्रीणां सोऽपि
पुमान् सम्यग्, दोषयत्नां न बुध्यते ॥ ९५ ॥ नानास्थानस्थदोषाणां, परस्परमपश्यताम् । कृपया स्त्रीमिषादेकं, गोष्ठीस्थानं
व्यधाद्विधिः ॥ ९६ ॥ तत्तासामतिवक्राणां, सूक्तिषु प्रतियन्ति ये । पश्यन्तोऽपि पुमांसस्ते, जात्यन्धा इति मे मतिः ॥ ९७ ॥
परदोषेक्षणैः किं वा, त्वमेवाद्दोषमातनु । यद्बद्धाङ्घ्रेरुपानद्भ्यां, सर्वा चर्मावृतेव भूः ॥ ९८ ॥ मित्रद्रोहः कृतघ्नत्वं, स्तैन्यं
विश्वासघातिता । परस्त्रीगमनं चेति, महापापान्युपार्जयम् ॥ ९९ ॥ तेषां फलमिहाप्यासं, दुःखमीदृमयाऽधुना । यदुग्रपुण्य-

पापाना—मिहैव फलमाप्यते ॥ ४०० ॥ नृपतिद्रोहिणे मह्य—मियं वा युक्तमद्रुहत् । यादृक् क्रियते कर्म, फलं तादृगवा-
प्यते ॥ १ ॥ इति ध्यायन्स भोगेभ्यो, विरक्तः शुद्धधर्मधीः । चारणश्रमणोपान्ते, तत्र दीक्षां ग्रहीष्यति ॥ २ ॥ तप्यमान-
स्तपस्तीव्रं, नासाग्रन्यस्तलोचनः । कायोत्सर्गे च तत्रैव, स स्थास्यति शुभाशयः ॥ ३ ॥ अथ पातालसुन्दर्याः, पोताः कति-
पयैर्दिनैः । आगमिष्यन्ति तत्रैव, तटे दैवनियोगतः ॥ ४ ॥ तत्र पोतस्थलोकेषु, गृह्णात्स्विन्धनोदकम् । पातालसुन्दरी स्वैरं,
विलाससुखमिच्छती ॥ ५ ॥ सानुरागं सुकण्ठेन, रममाणा प्रवेक्ष्यति । विविधद्रुमसच्छाय—मुद्यानं कुसुमाकरम् ॥ ६ ॥
( युग्मम् ) सुकण्ठः सुखमां तस्य, वीक्ष्यमाणः सकौतुकम् । द्रक्ष्यत्यनङ्गदेवर्षिं, कायोत्सर्गसुनिश्चलम् ॥ ७ ॥
स्वस्वामिसुहृदालोकान्—मुदितः सरलाशयः । तदा वन्दिष्यते सोऽपि, चरणन्यस्तमस्तकः ॥ ८ ॥ तं वीक्ष्य सुहृदं हृष्ट—मानसो
मुनिरप्यथ । पारयित्वा द्रुतं कायो—त्सर्गमालापयिष्यति ॥ ९ ॥ पातालसुन्दरी दृक्षा—त्वरिता वीक्ष्य तं तदा । ध्यास्यत्यम्बुनिधि-
क्षिप्तो—ऽप्यसौ हा जीवितोऽधुना ॥ ४१० ॥ किञ्च—वैरी सुकण्ठोऽस्मा—ज्ज्ञातमद्दुष्कृतोऽधुना । यावदुद्घाटिता पोत—जनान्तः
पातयेन्न माम् ॥ ११ ॥ दुष्टमेवं हित्वाऽमुं, तावदात्महितं ध्रुवम् । कुर्वे प्रागेव सज्जे हि, सेतुबन्धः प्रशस्यते ॥ १२ ॥
( युग्मम् ) प्रत्युत्पन्नमतिः सैवं, विचार्य कपटे पटुः । श्वासपूर्णमुखी सार्थं, द्रुतमागत्य वक्ष्यति ॥ १३ ॥ भो भो लोकाः
पलायध्वं, पोतेष्वारुह्य सत्वरम् । नृचक्षाः पृष्ठलग्नो मे, येनेति यमभीषणः ॥ १४ ॥ सुकण्ठो भक्षितस्तेन, ग्रासेनैकेन पापिना ।
जीवन्ती कथमप्यागा—मत्र पुण्यवशा त्वहम् ॥ १५ ॥ इत्याकस्मिकमुत्थाप्य, भयं सा भृशमुत्सुका । सद्यो लोकैः सहारूढा
पोतांश्च मेलयिष्यति ॥ १६ ॥ ततो द्वीपान्तरे गत्वा, पुरे क्वापि महत्यसौ । संवरीष्यति पोताद्यं, सर्वं वाह्यमुपस्करम् ॥ १७ ॥

च सा ॥ ८३ ॥ क्रमेणेङ्गितवेदित्वात्, सुकण्ठोऽपीति वेदिता । यन्नूनमम्बुधौ क्षिप्तः, सार्थेशः पापयाऽनया ॥ ८४ ॥
युवानौ धनिनौ रूप–सौभाग्यौदार्यशालिनौ । भृशानुरक्तमनसौ, क्षितिभुक्सार्थनायकौ ॥ ८५ ॥ सारालङ्कार-
दानाद्यै–र्बहुधोपकृताऽप्यसौ । दुर्जनप्रकृतिः पापा, कृतघ्ना मुमुचे यदि ॥ ८६ ॥ जनमात्रस्य तद्रूप–लावण्यविकला-
कृतेः । निर्धनस्य ममात्मीया, सर्वथा न भविष्यति ॥ ८७ ॥ ( त्रिभिर्विशेषकम् ) इयं कर्णान्तरुक्षीव, गृह्णतो
मुञ्चतोऽपि मे । भाविनी चाऽचिरादेव, महाऽनर्थाय पापिनी ॥ ८८ ॥ एवं विदितदोषत्वात्, सुकण्ठोऽपि विरक्तहृत् ।
तया समं बहिर्वृत्त्या, रंस्यते पटुचाटुमान् ॥ ८९ ॥ अयं सार्थपतिः, पुण्यैः फलकं प्राप्य वारिधौ । तरन् कतिपये-
र्घस्रैः, सिंहलद्वीपमाप्स्यति ॥ ३९० ॥ तत्र मिष्टजलैर्नाना–फलैश्चातिपचेलिमैः । स्वस्थीभूतवपुश्चैवं, चिन्तयिष्यति चेतसि ॥९१॥
एकान्तेनानुरक्तोऽपि त्यागी भोगी श्रियां निधिः । प्राप्तोऽहं दुरवस्थां हा, कीदृशीमनयाऽधुना ॥ ९२ ॥ सा प्रीतिस्तानि
चाटूनि, ताश्चौचित्यादिसत्क्रियाः । सर्वमेकपदे हन्त, नाशितं पापयाऽनया ॥ ९३ ॥ स्वशीलकुलमालिन्यं, जने च वचनीय-
ताम् । न यामजगणं गृह्णं–स्तस्या वृत्तमिदं च हा ! ॥ ९४ ॥ यो दर्शनिशि सङ्ख्यातु–मीष्टे निखिलतारकान् । स्त्रीणां सोऽपि
पुमान् सम्यग्, दोषपत्तीं न बुध्यते ॥ ९५ ॥ नानास्थानस्थदोषाणां, परस्परमपश्यताम् । कृपया स्त्रीमिषादेकं, गोष्ठीस्थानं
व्यधाद्विधिः ॥ ९६ ॥ तत्तासामतिवक्राणां, मुक्तिषु प्रतियन्ति ये । पश्यन्तोऽपि पुमांसस्ते, जात्यन्धा इति मे मतिः ॥ ९७ ॥
परदोषेक्षणैः किं वा, त्वमेवादोषमातनु । यद्गूढाङ्घ्रेरुपानद्भ्यां, सर्वा चर्मावृतैव भूः ॥ ९८ ॥ मित्रद्रोहः कृतघ्नत्वं, स्तैन्यं
विश्वासघातिता । परस्त्रीगमनं चेति, महापापान्युपार्जयम् ॥ ९९ ॥ तेषां फलमिहाप्यासं, दुःखमीदृग्मयाऽधुना । यदुग्रपुण्य-

पापाना—मिहैव फलमाप्यते ॥ ४०० ॥ नृपतिद्रोहिणे मह—मियं वा युक्तमद्रुहत् । यथादृक् क्रियते कर्म, फलं तादृगवाप्यते ॥ १ ॥ इति ध्यायन्स भोगेभ्यो, विरक्तः शुद्धधर्मधीः । चारणश्रमणोपान्ते, तत्र दीक्षां ग्रहीष्यति ॥ २ ॥ तप्यमानस्तपस्तीव्रं, नासाग्रन्यस्तलोचनः । कायोत्सर्गे च तत्रैव, स स्थास्यति शुभाशयः ॥ ३ ॥ अथ पातालसुन्दर्याः, पोताः कतिपयैर्दिनैः । आगमिष्यन्ति तत्रैव, तटे दैवनियोगतः ॥ ४ ॥ तत्र पोतस्थलोकेषु, गृह्णानेष्विन्धनोदकम् । पातालसुन्दरी स्वैरं, विलाससुखमिच्छती ॥ ५ ॥ सानुरागं सुकण्ठेन, रममाणा प्रवेक्ष्यति । विविधद्रुमसच्छाय—मुद्यानं कुसुमाकरम् ॥ ६ ॥ ( युग्मम् ) सुकण्ठः सुखमां तस्य, वीक्ष्यमाणः सकौतुकम् । द्रक्ष्यत्यनङ्गदेवर्षिं, कायोत्सर्गेसुनिश्चलम् ॥ ७ ॥ स्वस्वामिसुहृदालोकात्—मुदितः सरलाशयः । तदा वन्दिष्यते सोऽपि, चरणन्यस्तमस्तकः ॥ ८ ॥ तं वीक्ष्य सुहृदं हृष्ट—मानसो मुनिरप्यथ । पारयित्वा द्रुतं कायो—त्सर्गमालापयिष्यति ॥ ९ ॥ पातालसुन्दरी दृष्ट्वा—त्वरिता वीक्ष्य तं तदा । ध्यास्यत्यम्बुनिधिक्षिप्तो—ऽप्यसौ हा जीवितोऽधुना ॥ ४१० ॥ किञ्च—वैरी सुकण्ठोऽस्मा—ज्ज्ञातमद्दुष्कृतोऽधुना । यावदुद्घाटितो पोत—जनान्तः पातयेन्न माम् ॥ ११ ॥ दुष्टमत्रैव हित्वाऽमुं, तावदात्महितं ध्रुवम् । कुर्वे प्रागेव सज्जे हि, सेतुबन्धः प्रशस्यते ॥ १२ ॥ ( युग्मम् ) मत्युत्पन्नमतिः सैवं, विचार्य कपटे पटुः । श्वासपूर्णमुखी सार्थे, द्रुतमागत्य वक्ष्यति ॥ १३ ॥ भो भो लोकाः पलायध्वं, पोतेष्वारुह्य सत्वरम् । नृचक्षाः पृष्ठलग्नो मे, येनैति यमभीषणः ॥ १४ ॥ सुकण्ठो भक्षितस्तेन, ग्रासेनैकेन पापिना । जीवन्ती कथमप्यागा—मत्र पुण्यवशा त्वहम् ॥ १५ ॥ इत्याकस्मिकमुत्थाप्य, भयं सा भृशमुत्सुका । सद्यो लोकैः सहारुह्य, पोतांश्च मेलयिष्यति ॥ १६ ॥ ततो द्वीपान्तरे गत्वा, पुरे क्वापि महत्यसौ । संवरीष्यति पोतार्थं, सर्वं भाण्डमुपस्करम् ॥ १७ ॥

९ * *

नानाभोगांश्च भुञ्जाना, स्वैरं नटविटैः समम् । पातालसुन्दरी तत्र, वेश्यात्वं प्रतिपत्स्यते ॥ १८ ॥ अभक्ष्यभक्षणाऽपेय-पानैः पापमुपार्य सा । मृता च नारकीभूय, महादुःखानि भोक्ष्यते ॥ १९ ॥ ज्ञात्वा दोषानयंतस्याः, स्वयं मुनिमुखात्तथा । सुरूण्टो भोगनिर्विण्ण-स्तत्रैव प्रव्रजिष्यति ॥ ४२० ॥ चारित्रं निरतीचारं, पालयित्वाऽथ तौ मुनी । स्वर्लोकं यास्यतश्चैका-ऽवतारेण ततः शिवम् ॥ २१ ॥ स्वयं प्रयातामप्येतां, द्रोहिणीं स्वैरचारिणीम् । यद्याप्तुमीहसेऽद्यापि, धिग्राजंस्तव मूढताम् ॥ २२ ॥ वृत्तेऽस्याश्च श्रुते विद्धि, सर्वस्त्रीवृत्तमीदृशम् । एकस्मिन् वीक्षिते सिक्थे, सर्वा स्थाली हि बुध्यते ॥ २३ ॥ इत्थं दोषमयीषासु, सर्वयोषित्सु सर्वथा । व्यामोहं तद्विमुच्याशु, राजन्नात्महितं सृज ॥ २४ ॥ एवं सर्वविदो वाक्य-सुधास्वादेन भूभुजः । स्त्रीव्यामोहविषावेग-स्तत्क्षणादुपशान्तवान् ॥ २५ ॥ विषयेभ्यो विरक्तात्मा, ज्ञातस्त्रीचरितस्तदा । स प्राव्राजीन्नृपस्तस्य-स्तस्य केवलिनोऽन्तिके ॥२६॥ प्रवर्धमानसंवेग-रङ्गो निःसङ्गहृत्तम च । सप्तमेऽह्नि शुभध्यानात्, केवलज्ञानमाप्तवान् ॥२७॥ सर्ववेदी स राजर्षिः, प्रतिबोध्य भुवं चिरम् । सर्वकर्मक्षयादाप, क्रमेण परमं पदम् ॥२८॥ आकलय्येति चापल्यं, महिलानामिहोदितम् । कामेभ्यस्तदधीनेभ्यो, वत्सा विरमताऽधुना ॥ २९ ॥ मर्त्याऽमर्त्यसुखैर्भुक्तै-र्नैकशोऽपि मनीषितैः । शक्यते जातु जीवोऽयं, न सन्तोषयितुं मनाक् ॥ ४३० ॥ स्वप्नानुभूता विषयाः, स्मृतिशेषा यथाऽधुना । भाविनोऽमी तथैवाग्रे, भुज्यमाना अपि स्फुटम् ॥३१॥ नराऽमरेषु विषयान्, बहुशः सेवितानपि । अपूर्वानिव मन्यन्ते, हन्त मोहेन देहिनः ॥ ३२ ॥ यदुक्तम्— पत्ता य कामभोगा, कालमणंतं इहं सउवभोगा । अप्पुव्वं पिव मन्नइ, तहवि अ जीवो मणे सुक्खम् ॥ ३३ ॥ अनन्तेनापि कालेन, वत्सा जीवो न तृप्यति । कामभोगैः पुराऽङ्गार-दाहकः सलिलैरिव ॥ ३४ ॥ तथाहि-ग्रीष्मर्तौ निर्जलेऽरण्ये, कश्चिदङ्गारदाहकः । सहादाय पयःकुम्भ-मागादङ्गारहेतवे

॥ ३५ ॥ तस्मिन्नितस्ततो भ्रान्त्वा, च्छित्त्वा दारुणि भूरिशः । मध्याह्ने ज्वालयत्येष, राशीकृत्य पृथक् पृथक् ॥ ३६ ॥
भ्रमणेन मयासेन, तूकया चाग्निसेवया । भीष्मग्रीष्मानुभावेन, दुस्सहेनातपेन च ॥ ३७ ॥ स तदाऽतितृपाक्रान्तो, व्याकुली-
भूतविग्रहः । कुम्भाऽखिलाऽम्बुपानेऽपि, नाप स्वास्थ्यं मनागपि ॥ ३८ ॥ सर्वतोऽपि जलं पश्यन्, भ्रमदृष्टिः स सुप्तवान् ।
आर्त्तध्यानपरश्चाथ, स्वप्नान्तः स्वपुरेऽगमत् ॥ ३९ ॥ तृषार्त्तस्तत्र सर्वाम्भो-ऽपिबच्च स्वपुरौकसाम् । तथैव तृषितो विश्व-
वापीकूपसरांस्यपि ॥ ४४० ॥ तज्जलैरप्यशान्तायां, तृष्णायामग्नितैलवत् । अपात्स सरितोऽशेषाः, सर्वांश्चापि सरित्पतीन्
॥ ४१ ॥ तथापि तृषितो नीर-मीक्षमाणो भ्रमन्नयम् । अत्यगाधजलं कूपं, मरुदेशे व्यलोकयत् ॥ ४२ ॥ लताभिस्तत्र
निक्षिप्य, कर्षिताद् दर्भपूलकात् । तृट्क्लान्तो जिह्वयाऽलिहद्, गलन्तीः सोऽम्बुविप्रुषः ॥ ४३ ॥ दृष्टान्तस्यास्य तत्त्वार्थं,
वत्साः शृणुत साम्प्रतम् । वापीकूपसरःसिन्धु-दधीनामपि वारिभिः ॥ ४४ ॥ प्राग्निपीतैर्यथाऽङ्गार-दाहकोऽनुपशान्ततृट् ।
दर्भाग्रविगलद्वारि-पानान्न भविता सुखी ॥ ४५ ॥ ( युग्मम् ) स्वर्गभोगैः समुद्राभै-रतृप्तास्तत्प्रिभैष्यथ । तथा न हि नृणां भोगैः,
कुशाग्रजलसन्निभैः ॥ ४६ ॥ संसाराऽसारतागर्भं, कुमाराणां पुनः प्रभुः । समयोपनिपद्वैता-लिकाऽध्ययनमादिशत् ॥ ४७ ॥
सम्बुज्झह किं न बुज्झह ? संबोही खलु पिच्च दुल्लहा । नो हूवणमंति राइओ नो सुलहं पुणरावि जीवियं ॥ ४८ ॥
तथाहि— डहरा वुड्ढा य पासह गब्भत्था वि चयंति माणवा । सेणे जह वट्टयं हरे, एवं आउखयंमि तुट्टई ॥ ४९ ॥
मायाहिं पियाहिं लुप्पई नो सुलहा सुगई य पेच्चओ । एयाइं भयाइं पेहिया, आरंभा विरमेज्ज सुव्वओ ॥ ४५० ॥ जमिणं
जगई पुढो जगा कम्मेहिं लुप्पंति पाणिणो । सयमेव कडेहिं गाहई नो तस्स मुच्चेज्ज पुट्ठयं ॥ ५१ ॥ देवा गंधव्वरक्खसा,

असुरा भूमिचरा सरीसिवा। राया नरसेट्ठिमाहणा, ठाणा ते वि चयंति दुक्खिया ॥ ५२॥ कामेहि अ संथवेहि अ, गिध्धा कम्मसहाकालेण जंतवो। ताले जह बंधणच्चुए, एवं आउखयंमि तुट्टई ॥ ५३ ॥ भुत्तुं विसए सुरेसुणुत्तरे जइ तित्ती तुब्भे न तेहि वि। ता किं तुच्छेहिं इमेहिं ही परितित्ती तुब्भाण होहीहि ॥ ५३ ॥ अहिणव्व सया भयंकरे जलनिहितरलतरंगभंगुरे विसए। परिणामदारुणे जाणिय मा एएसु रज्जहा ॥ ५५ ॥ विसयामिसलुद्धमाणसारागंधा विवसा विसंठुला। परिहरिआ हिया हयासया बहुहा नासमुविंति पाणिणो ॥ ५६ ॥ वरवीणावंसवारणं सद्देसुं सुइसुक्खदासु। आसत्ता मूढमाणसा नासं जंति मयच्च पेगसो ॥ ५७ ॥ सिंगारविआरबंधुरे सुललिअलासविलासपेसले रूवे। विणिविट्ठदिट्ठिणो विणिवायं सलहुव्व उवंति ते ॥ ५८ ॥ सरसाहाराभिलासिणो महुरमज्जमहुमंसभोइणो। बिडिसामिसलुद्धबुद्धिआ मीणा इव हम्मंति पाणिणो ॥ ५९ ॥ मूढमणा न मुणंति अत्थं गंधे लुद्धा जहालिणो। विणिवायं नणुवउज्जंति, पाणिणो वरकुसुमामोअमोहिआ ॥ ४६० ॥ मिउमणहरफासलालसा अमुणिअदोसगुणे सयालसा। वज्झंति गयव्व बालिसा रमणीरागविमूढमाणसा ॥ ६१ ॥ इत्यादीन्यष्टनवति, काव्यान्यादिश्य सर्ववित्। सुतानप्यष्टनवति, क्रमेण प्रत्यबूबुधत् ॥ ६२ ॥ प्रभोगिराऽथ ते जाति-स्मृतिमासाः समे सुताः। स्वोभुक्तवत् पुराभुक्तं, सस्मरुः स्वर्गिणां सुखम् ॥ ६३ ॥ चिन्तयन्ति स्म सर्वार्थ-सिद्धौ याः सुखसम्पदः। एकान्तात्यन्तनिर्वाण-सुखानां वर्णिकाः क्व ताः ? ॥ ६४ ॥ नवस्रोतः स्रवद्विस्र-रसबीभत्सवर्ष्मणाम्। मर्त्यानां तु सुखाभासाः क्वामी तुच्छतराः पुनः ? ॥ ६५ ॥ ( युग्मम् ) अनुत्तरसुखं तेषां, सुचिरं भुक्तपूर्विणाम्। तुच्छेषु विषयेष्वेषु, न रेमेऽथ मनो मनाक् ॥ ६६ ॥ यतः—अविदितपरमानन्दो, विषसुखं मन्यते हि रमणीयम्। तस्यैव तैलमिष्टं, येन न दृष्टं घृतं

क्वापि ॥ ६७ ॥ अहमिन्द्रपदे नित्यं, सुखिता ये चिरं स्थिताः भरताज्ञावशं राज्यं, न तेषां रुच्चे हृदि ॥ ६८ ॥
यतः—क्रीडिता ये चिरं हंसा, निर्मलाम्भसि मानसे :। तेषां रुचिर्न सेवाल—जटिले खातिकाम्भसि ॥ ६९ ॥
उल्लसच्छुद्धभावाश्च, ततस्ते स्वामिनन्दनाः । नत्वा विज्ञपयन्त्येवं, कृताञ्जलिपुटाः प्रभुम् ॥ ४७० ॥
जन्ममृत्युजरारोगै—स्तावदेवात्र बाध्यते । त्वद्गीरसायनं शुद्धं, यावज्जन्तुर्न सेवते ॥ ७१ ॥ तापयेत्तावदात्मानं, चतुर्गत्यापदातपः ।
त्वत्पादपादपच्छायां, तात यावन्न सोऽश्नुते ॥ ७२ ॥ तावद् भ्रमन्ति संसारे, दुःस्थिता भव्यजन्तवः ।·यावदश्नुवते नैते, त्वां
जङ्गमसुरद्रुमम् ॥ ७३ ॥ न तरन्ति भवाम्भोधिं, तात ! त्वय्यपि तारके । भव्यजीवा महामोह—माहात्म्यं तत्र कारणम् ॥ ७४ ॥
भुनक्तु भरतैश्वर्यं, निखिलं भरतेश्वरः । वयं स्वात्महितां दीक्षां, प्रतिपत्स्यामहेऽधुना ॥ ७५ ॥ इति ते विषयोद्विग्ना, भृशं
संविग्नचेतसः । तृणवद्राज्यमुत्सृज्य, दीक्षामाददिरे द्रुतम् ॥ ७६ ॥ क्षपकश्रेणिमारुह्य, व्रतादानात्तथाचिरात् । घातिकर्मक्षयेणैते,
सर्वे सर्वविदोऽभवन् ॥४७७॥

॥ इति श्रीतपागच्छाधिराजश्रीसोमसुन्दरसूरिपट्टप्रभाकरगच्छनायकश्रीमुनिसुन्दरसूरिविनेयवाचनाचार्य—सोममण्डनगणिकृतायां श्रीयुगादिजिनदेशनायां चतुर्थ उल्लासः ॥

---

# अथ पञ्चम उल्लासः ॥

अनन्तसिद्धिः समदृक्, स्वर्णवर्णोऽस्तदुस्तमः । अविषादी नवीनोऽय–मादीशः सम्पदेऽस्तु वः ॥१॥ अथोपेतान् जिनोपान्ते, चरैर्ज्ञात्वा सहोदरान् । चिन्तयामासिवानेवं, विषण्णो भरतेश्वरः ॥ २ ॥ ऐश्वर्योन्मत्तचित्तेन, सेवामुद्दिश्य यन्मया । आहूता भ्रातरोऽप्येते, प्रसभं प्राकृता इव ॥ ३ ॥ दूनात्मानस्ततो नूनं, ते तेजस्वितया समे । पितरं मदनौचित्य–कथनायोपतस्थिरे ॥ ४ ॥ देवाऽसुरसभासीनो, हन्त तातोऽपि तन्मुखात् । श्रुत्वैतन्मदनौचित्यं, मनसि त्रप्स्यते मनाक् ॥ ५ ॥ राज्यलोभाद् ध्रुवं ज्येष्ठः, कनिष्ठान्निरवासयत् । इति तातः सुराश्चापि, हन्त ज्ञास्यन्ति चेतसि ॥ ६ ॥ चक्रस्यायुधशालाया–मप्रवेशेन हेतुना । प्रेरितो मन्त्रिसामन्तै–र्विरूपं तद्व्यधां ध्रुवम् ॥ ७ ॥ किञ्च–बालभावाल्लघिष्ठाश्चेन्न चलन्त्यग्रजाज्ञया । तथापि स शुभान्वेषी, परुषं तर्जयेन्न तान् ॥ ८ ॥ यतः–अतितर्जना न कार्या, शिष्यसुहृद्भृत्यसुतकलत्रेषु । दध्यपि सुमथ्यमानं, त्यजति स्नेहं न सन्देहः ॥ ९ ॥ तातोपान्ते ततो गत्वा–ऽथानुनीयानुजन्मनः । आनयाम्यत्र राज्ये च, स्थापयामि निजे निजे ॥ १० ॥ अष्टापदे ततो गत्वा, नत्वा च वृषभप्रभुम् । सोदर्यान् क्षमयामास, निजागो भरतः कृती ॥ ११ ॥ आह चागत्य राज्यान्तर्भुञ्जाना विविधं सुखम् । निजाग्रजस्मां वत्साः, कृतार्थीकुरुताधुना ॥ १२ ॥ एवं सस्नेहमाहूता, भरतेनाग्रजन्मना । रागद्वेषवियुक्तास्ते, निःसङ्गा न

वदन्त्यपि ॥ १३ ॥ नूनं दोद्रयया नाऽमी, वदन्तीत्यसुखाग्निना । दह्यमानं नृपं स्वामी, सिसेचेति वचोऽमृतैः ॥ १४ ॥ मा धा दुःखं मुधा राजन्, दोद्रयारेकयाऽनया । रोषतोषवशा नाऽमी, यन्महान्तो महर्षयः ॥ १५ ॥ यतः—शत्रौ मित्रे तृणे स्त्रैणे, स्वर्णेऽश्मनि मणौ मृदि । मोक्षे भवे च सर्वत्र, समचित्ता महर्षयः ॥ १६ ॥ एषां साम्यसुधामग्न—मनसां तद्व्रतैनसाम् । न तृष्णा राज्यसम्पत्सु, विषयेषु च हारिषु ॥१७॥ अपि च—गृह्णन्त्याहारमपि ये, धर्तुं संयमजीवितम् । विषयेषु विमुह्यन्ति, भवाङ्कुरेष्वमी कथम् ? ॥ १८ ॥ रागद्वेषविहीनांस्तान्, संसारसुखनिःस्पृहान् । तातवाचा यतीभूतान्, ज्ञात्वा भूपतिरानमत् ॥ १९ ॥ अथ घार्तिकपक्वान्न—शालिदालिप्रभृत्यसौ । भोज्यं दातुं कनिष्ठेभ्यः, सूदैरानीनयन्नृपः ॥ २० ॥ दीयमानं स्वहस्तेन, भोज्यं भरतभूभुजा । अनेषणीयमिति तत्, पश्येयुर्न दृशाऽपि ते ॥ २१ ॥ नाऽमी मद्दत्तमाहारं, गृह्णीयुः केन हेतुना ? । इति चिन्तापरं भूपं, पुनरूचे जगद्गुरुः ॥ २२ ॥ राजपिण्डो ह्ययं तावत्, अथवाऽभ्याहृतः पुनः । कल्पते नैव साधूनां, नृपपालस्थमध्विव ॥ २३ ॥ ततो विषादभाग् दध्यौ, नृपस्तातसहोदरैः । सम्मत्यहमयोग्यत्वा—न्नूनं त्यक्तोऽस्मि सर्वथा ॥ २४ ॥ ममाद्भुतमिदं राज्यं, विफलं खवकेशिवत् । आहारस्यापि दानेन, न सोदर्योपयोगि यत् ॥ २५ ॥ नूनं श्रमणसत्पात्र—दानमालम्बनं विना । इयत्परिग्रहारम्भ—भारितः पतितोऽस्म्यदः ॥ २६ ॥ यतः—नरके येन भोक्तव्यं, चिरं तत्पापपूर्तये । नियुङ्क्ते तं विधी राज्ये, बह्वारम्भपरिग्रहे ॥ २७ ॥ यद्दत्तं भोज्यवस्त्रादि, श्रमणेषूपयुज्यते । प्राकृता अपि ते धन्या, न तु राजाऽपि मादृशः ॥ २८ ॥ एवं विषादविच्छाया—ननं वीक्ष्याथ भूपतिम् । तद्विषादापनोदाय, सुरेन्द्रः सार्वमित्यवक् ॥ २९ ॥ कियन्तोऽवग्रहाः स्वामिं—स्तेषां दानेन किं फलम् ? । ततः प्रभुरवक् सौम्या—ऽवग्रहाः पञ्च कीर्तिताः ॥ ३० ॥

तथाहि—सौधर्माधिपतेर्मेरो–र्दक्षिणस्यामवग्रहः । ईशानेन्द्रस्य तूदीच्यां, देवेन्द्रावग्रहो ह्यसौ ॥ ३१ ॥ राज्ञः षट्खण्डभूभर्त्तु–र्द्वितीयः स्यादवग्रहः । तृतीयो मण्डलेशस्य, तुर्यः शय्यातरस्य च ॥ ३२ ॥ साधोः साधर्मिकः साधुः, पञ्चमस्तदवग्रहः । स्वस्वावग्रहदानं च, भवेदिष्टार्थसिद्धये ॥ ३३ ॥ सौधर्माधिपतिर्हृष्टः, प्रभुमेवमभाषत । श्रमणानामनुज्ञातः, सर्वः स्वावग्रहो मया ॥ ३४ ॥ तदैव भरतो दध्यौ, साधूनां स्वमवग्रहम् । अहमप्यनुजानामि, धन्यः स्यामियताऽपि यत् ॥ ३५ ॥ ततः स्वावग्रहानुज्ञा–भाविपुण्यफलाशया । किञ्चित् प्रमुदितस्वान्तः, सर्वज्ञमवदन्नृपः ॥ ३६ ॥ स्वैरं सर्वत्र निःशङ्काः, षट्खण्डभरतावनौ । विहरन्तु महात्मानो–नुज्ञातोऽवग्रहो मया ॥ ३७ ॥ किञ्च भोज्यमिदं तात !, कुत्र कार्यं जिनोऽप्यवक् । शुद्धधर्मक्रियोद्युक्ताः, स्वल्पारम्भपरिग्रहाः ॥ ३८ ॥ इच्छन्तः सर्वचारित्रं, पञ्चाणुव्रतधारिणः । राजन् सत्पात्रमुच्यन्ते, श्रमणोपासका अपि ॥ ३९ ॥ ततस्तातगिरा जात–श्रद्धः श्राद्धान् नराधिपः । प्रत्यहं प्रवरैर्भोज्यै–रतिवारमबूभुजत् ॥ ४० ॥ अलसाः सरसाहार–लम्पटत्वेन तेष्वथ । दम्भेन श्रावकीभूय, क्रमात्सुबहवोऽमिलन् ॥ ४१ ॥ ततः सोद्वेगमुर्वीशं, सूपकारा व्यजिज्ञपन् । शक्यन्ते नाऽतिभूयस्त्वाद्, देव ! भोजयितुं ह्यमी ॥ ४२ ॥ विक्षिप्य सूक्ष्मबीजानि, श्राद्धानां सत्रवर्त्मनि । परीक्षामातनोद्राजा, प्रत्युत्पन्नमतिस्ततः ॥४३॥ न प्राप्ता ये परीक्षायां, श्राद्धेभ्यस्तान् पृथग् व्यधात् । प्राप्तानां तु स काकिण्या, रेखाभिज्ञानमातनोत् ॥ ४४ ॥ षष्ठे षष्ठे ततो मासे, नव्यांस्तान् स परीक्षते । कुर्यात्पुनरभिज्ञान–मेवं ते तत्र भुञ्जते ॥ ४५ ॥ जितो भवान् वर्धते भी–र्मा हन मा हंसततो भवान् । जल्पन्त्यवहितीकर्तु–मिति ते नृपमन्वहम् ॥ ४६ ॥ सुश्राद्धधर्मनिष्ठानां, सर्वदाऽपीतिजल्पनात् । क्रमेण प्रथे तेषां, लोकान्तर्माहनाऽभिधा ॥ ४७ ॥ भरतेशकृतान् वेदान्, श्राद्धानुष्ठानगर्भितान् ।

पठन्तः पाठयन्तश्च, श्राद्धधर्मं वितेनिरे ॥ ४८ ॥ एवं तदन्वयोद्भुताः, क्रमात्सूत्रोपवीतिनः । सुविधेरर्हतस्तीर्थे,
यावदासन् महास्तिकाः ॥ ४९ ॥ व्युच्छेदः साधुधर्मस्य, सुविधेः शीतलस्य च । अन्तरे पल्यतुर्यांश-मभूत्
कालानुभावतः ॥ ५० ॥ तत्राऽभावेन साधूना-मपृच्छन् 'माहनान्' जनाः । धर्ममार्गं कियत्कालं, ते तं तथ्यमची-
कथन् ॥ ५१ ॥ पश्चाच्छनैः शनैस्ते च, साध्वभावान्निरङ्कुशाः । सर्वत्राऽपि स्वसन्तान-सुखनिर्वाहकाम्यया ॥ ५२ ॥
स्वर्णगोभूमिदानानि, स्वस्य चान्यदपि प्रियम् । स्वैरं भद्रकलोकेभ्यो, महाधर्मतयाऽवदन् ॥ ५३ ॥ ( युग्मम् ) परिग्रहारम्भमग्ना,
अब्रह्महनिरता अपि । आत्मानि ब्रह्मबीजत्वाचे पात्रत्वमपप्रथन् ॥ ५४ ॥ स्वेष्टदानक्रियाचार—गर्भितानि यदृच्छया ।
मुग्धप्रतारणायामी, नव्यशास्त्राण्यसूत्रयन् ॥ ५५ ॥ साध्वभावे च तान् मुग्धाः, सद्गुरुत्वेन मेनिरे । एरण्डेऽपि भवेत्पीठं, यतो
निर्वृक्षनीवृति ॥ ५६ ॥ तदुक्तं वेदपदवत्तथ्यं मुग्धाश्च मेनिरे । जात्यन्धः किमु संदेग्धि, कर्पकादितवर्त्मनि ? ॥ ५७ ॥
मुश्राद्धास्तेऽभवन्नेवं, क्रमाज्जिनमतद्रुहः । राज्ये निःस्वामिके किं न, तलारक्षा मलिम्लुचाः ? ॥ ५८ ॥ अथ च-मस्तुतः
मतिपेधोऽत्र, पुत्राणां मथममभोः । तदुच्यतेऽधुना किञ्चि-द्वयं बाहुबलेरपि ॥ ५९ ॥ नृपैरमात्यैः सार्थेशैः, श्रेष्ठिभिश्च नटैर्भटैः ।
आसेव्यमानमास्थाना—सीनं श्रीभरतेश्वरम् ॥ ६० ॥ किं स्वामिश्चक्रमद्यापि, न विशत्यायुधौकसि ? । इति व्यजिज्ञपन्नत्वा,
सेनापतिरथान्यदा ॥ ६१ ॥ ( युग्मम् ) तदेवं भरतोऽवादीद्, जेतव्योऽद्यापि कोऽस्ति नः ? । विरोधिवीरो भरते, योऽस्मदाज्ञां
न मन्यते ॥ ६२ ॥ वृद्धामात्यस्तदोवाच, मतापतपनस्य ते । जेतव्यः कोऽपि भरते, मर्त्याऽमर्त्येषु नेक्ष्यते ॥ ६३ ॥ चक्रं
त्वधिष्ठितं देवै-र्न विशत्यायुधौकसि । तद्विमृश्यमिदं किञ्चित्, स्मृतं वा साधु साम्प्रतम् ॥ ६४ ॥ तत्रानुजन्मा बहुली-पतिर्बाहुबली

यली। आज्ञां न मन्यतेऽद्यापि, वलिष्ठे वलसूदनः ॥ ६५ ॥ एकतः क्ष्माभुजः सर्वे, स वाहुवलिरेकतः। सादृश्यं न तथाप्यत्र, ज्योतिश्चक्रार्कयोरिव ॥ ६६ ॥ मह्यां महावलः स्वामी, दिवि वज्रधरः पुनः। स तु देव! महावाहु–रुभाभ्यां भाति सम्प्रति ॥ ६७ ॥ मयाऽस्मिन्नजिते नूनं, किं जितं भरतावनौ?। मन्ये चक्रमिति हीणं, न विशत्यायुधौकसि ॥ ६८ ॥ पष्ट्या वर्षसहस्रैस्ते, साधितोऽखिलभूभुजः। इयं जनेषु हास्याय, कनिष्ठेनावहीलना ॥ ६९ ॥ स्वेल्पवज्ञास्पदं तन्व–न्नाज्ञैश्वर्यं परेषु यत्। नरोऽनास्तृतवद्वोर्ध्वो–च्चोचवद्धसते जनैः ॥ ७० ॥ इत्यमात्यगिरा तुन्नो, दूनो दुर्विनयाल्लघोः। साम्नैव सिसाधयिषुः, कनिष्ठं वैरभीरुकः ॥ ७१ ॥ नृपः सारपरीवारं, सुवेगमनुशिष्य सः। प्राहिणोद्वाहुवलये, सम्यग्दूतकलाविदम् ॥ ७२ ॥ (युग्मम्) उत्तिष्ठतस्तदाऽस्याऽभूत्, क्षुतं प्रागेव दक्षिणम्। रथमारोहतश्चाथ, कीले वस्त्राञ्चलोऽलगत् ॥ ७३ ॥ एतत्कार्यविधौ वामं, दैवं पश्यदिवासकृत्! पस्पन्दे नयनं वामं, व्रजतस्तस्य वर्त्मनि ॥ ७४ ॥ दक्षिणाद्वाममुत्तीर्णा, हरिणा विपमा द्रुतम्। उत्ततार च दुर्गास्य वामं वामार्थशंसिनी ॥ ७५ ॥ उत्तीर्णः पुरतस्तस्य, प्रलम्बः कृष्णपन्नगः। आज्ञेव दत्ता दैवेन, सैतद्यानरुत्सया ॥ ७६ ॥ प्रत्यूहपिशुनैरेभिः, शकुनैः स्खलितोऽपि सः। चचालाऽस्खलितस्तत्र, स्वाम्यादेशेऽकनिष्ठधीः ॥ ७७ ॥ भीषणा यमराजस्य, राजधानीरिवाऽध्वनि। सोऽतीत्य व्याघ्रसिंहाद्यैः, सङ्कुला विपुलाटवीः ॥ ७८ ॥ राज्ञः श्रीवाहुवलिनः, सर्वत्रापि वलीयसः। स्वर्ङ्गीभवन्मृगं सद्यो–ऽप्यन्यायार्गलयाज्ञया ॥ ७९ ॥ समृद्धसकलग्राम–पुरपत्तनकर्वटम्। सौस्थ्यसौराज्यमुदितं, वहुलीदेशमागमत् ॥ ८० ॥ (त्रिभिर्विशेषकम्) ऋषभस्वामिनः शृण्वन्, राज्ञो वाहुवलेस्तथा। स्थाने स्थाने मुदा गोपै–र्गीयमाना गुणावलीः ॥ ८१ ॥ स म्लेच्छान् कोटिश पश्यन्, भयेन

भरतेशितुः । नंष्ट्वानार्यखण्डेभ्य-स्तं देशं निर्भयं श्रितान् ॥ ८२ ॥ दानैकदीक्षितैरिभ्यै-र्ग्रामे ग्रामे पुरे पुरे । चाटुवाक्यैः प्रार्थ्यमानान्, दानादानाय चार्थिनः ॥ ८३ ॥ भरतं भरताधीश-मपि जातमजानतः । सुनन्दानन्दनं मन्य-मानान् सर्वजगत्प्रभुम् ॥ ८४ ॥ स्वस्वामिनः प्रियीकर्तु-मिच्छतोऽप्यात्मनोऽसुभिः । जनान् जानपदान् मार्गे-ष्वनार्चान् वार्तयन् मुहुः ॥ ८५ ॥ समृद्ध्या स्वःपुरीमख्या-मथ तक्षशिलापुरीम् । प्रासदान् परिखास्वर्ण-प्रांशुप्राकारवेष्टिताम् ॥ ८६ ॥ ( षड्भिः कुलकम् ) नैकेन गच्छदागच्छ-द्धस्त्यश्वरथपत्तिभिः विस्तीर्णमपि सङ्कीर्णं, राजवर्त्म विभावयन् ॥ ८७ ॥ वीक्ष्य वैदेशिकैः पूर्णान्, नानावस्तुभिरापणान् । नृपभार्यैरिहायातां-स्तर्कयंस्तत्सदाकरान् ॥ ८८ ॥ महेभ्यान् सदलङ्कारान्, रूपसौभाग्यशालिनः । अट्टोपविष्टांस्त्रिदशा-निव पश्यन् सविस्मयम् ॥ ८९ ॥ व्याक्षेपाद्विस्मृतं स्वामि-वाचिकं च हृदि स्मरन् । सिंहद्वारमथो राज्ञः, सुवेगोऽगाच्छनैः शनैः ॥ ९० ॥ ( चतुर्भिः कलापकम् ) जगदद्वैतदोर्वीर्यं, विपुलैश्वर्यसम्पदम् । आदित्यमिव दुष्प्रेक्ष्यं, निरसपत्नमहःश्रिया ॥ ९१ ॥ कुमारामात्यसामन्त-सार्थेशैः सेवितक्रमम् । सम्भावयन्तं परितः, सेवकान् स्निग्धया दृशा ॥९२॥ नन्दनं श्रीसुनन्दाया, द्विपत्कन्दनिकन्दनम् । राजाज्ञयाऽन्तर्मुक्तोऽथ, स तं राजानमानमत् ॥९३॥ ( त्रिभिर्विशेषकम् ) पश्यन् जनोऽयं मभ्रातु-रिति स्नेहार्द्रया दृशा । ससम्भ्रमं तममाक्षी-दित्थं श्रीभरतानुजः ॥ ९४ ॥ चतुरङ्गचमूचक्रा-क्रान्तसर्वमहीभुजः । अयोध्यायामुपेतस्य, कृत्वा दिग्विजयं चिरम् ॥ ९५ ॥ प्रेयसीपुत्रपौत्राद्यैः, परीतस्याग्रजन्मनः । आस्ते विजयिनो भद्र !, भद्रं श्रीभरतेशितुः ॥ ९६ ॥ ( युग्मम् ) चिकीर्षुः स्वनृपोत्कर्ष-मपकर्षं च विद्विषाम् । जगाद गलितक्षोभः, सुवेगः पटुवाक्तदा ॥ ९७ ॥ जनानामपि यस्याज्ञा, वज्रपञ्जरमीप्सुषाम् । ईष्टे नानिष्टमाधातुं, यमराजोऽपि कर्हिचित् ॥ ९८ ॥

आसमुद्रान्तभूभर्तु-स्तव तस्याग्रजन्मनः । राजन्नभद्राऽऽरेकोऽपि, कुतस्त्यो वद सम्भवेत् ? ॥ ९९ ॥ ( युग्मम् ) परं विधाय दिग्यात्रां, निरादोऽसौ वेश्मनि । मिलनोत्कण्ठया स्नेहात्, तेनाहूता निजानुजाः ॥ १०० ॥ किञ्चित्प्रकल्प्य चितान्त-र्व्यलीकं तेऽग्रजन्मनः । प्राव्रजंस्तातपादान्ते, राज्यमुत्सृज्य सत्वरम् ॥ १ ॥ तद्वियोगाग्निना चित्ते, स भृशं परितप्यते । सांप्रतं शीतलीकुर्या-त्तत्त्वं त्वन्मिलनाम्भसा ॥ २ ॥ समानोदर्य एवासि, सापत्न्योऽप्यस्य साम्प्रतम् । अन्धयष्टिसमो राज्ये, भ्रातृव्येकस्त्वमेव यत् ॥ ३ ॥ अग्रजस्य च सोदर्य-वियोगव्यथितात्मनः । मिलनाय विविग्याया-ऽऽगतं तव विलोक्यते ॥ ४ ॥ स निःस्वोऽपि प्रतिष्ठावान्, सेव्यते यः स्वबन्धुभिः । तैः समृद्धोऽप्यवज्ञातः, प्रतिष्ठां तु न विन्दति ॥ ५ ॥ किञ्च-अखण्डशासनस्यास्य, पाकशासनतेजसः । सेवाहेवाकिभिः सर्वैः, सम्भूय वसुधाधवैः ॥ ६ ॥ महैरनुत्तरैर्मोदाद्, वर्षाणि द्वादशान्वहम् । पट्खण्डभरतैश्वर्या-ऽभिषेको विदधेऽधुना ॥ ७॥ ( युग्मम् ) यत्सर्वौचित्यकुशलो-ऽप्यगास्तत्रापि नाऽनुजः । केश्चिदाशङ्क्यते सैप, किञ्चिद्वां कलहो मिथः ॥ ८ ॥ राजन् ! हृदयदाहाय, स तु स्यात्सुहृदां भृशम् । सन्तुष्टानां परापायै-र्मनस्तोपाय च द्विषाम् ॥ ९ ॥ तत्तारभीमं सेवस्व, द्रुतमेत्य तमग्रजम् । विद्विषां च विलीयन्तां, मनस्येव मनोरथाः ॥ ११० ॥ विशो वदान्यस्तेजस्वी, न्यायनिष्ठः श्रियां निधिः । अग्रजः स्थाप्यते स्वामी, स्वर्णं सुरभि तद् ध्रुवम् ॥ ११ ॥ सार्वभौमतयाऽप्यस्य, परिसस्या कृता त्वया। अग्रजे विनयस्नेहं, जनेषु द्योतयिष्यति ॥१२॥ भ्रातृत्वान्मे विराद्धोऽपि, विधाता नैप विप्रियम् । इति चेतसि मा शासी-र्निःस्थाने पक्ष नानकम् ॥१३॥ आत्मनीनैः सदाराध्यो, विराध्यस्तु न जातु सः। रोपतोपफलं यस्य, विभोः साक्षात्समीक्ष्यते ॥१४॥ युद्धे निर्जित्य निःशेषान्, क्ष्माभुजोऽनेन हेलया । आक्षुद्रहिमवच्छैलं, साधिता भारतावनी ॥१५॥ अयस्कान्तैरिवाऽयांसि,

सेवार्थं नृसुरासुराः । पुण्यैः प्रकृष्टैराकृष्टा, आयान्ति भरतेश्वरम् ॥ १६ ॥ नृदेवाश्चासतो मन्ये, तमर्धासनदानतः । श्रीसौधर्ममहेन्द्रोऽपि, मयोदाढ्यं मन्यते ॥ १७ ॥ दर्पाचमवजानानः, ससैन्योऽपि रणे ध्रुवम् । उद्वेले तद्बलाम्भोधौ, सक्तुमुष्टिर्भविष्यति ॥ १८ ॥ प्लावयन्तः क्षितिं यस्य, हस्तिनोऽश्वा रथा भटाः । शक्याः स्खलयितुं केन, कल्लोला इव वारिधेः ॥ १९ ॥ समापतन्तीः सहसा, शत्रुसेनाः सहस्रशः । एकः सुषेणः सेनानी–र्यस्य स्खलयितुं क्षमः ॥ १२० ॥ हेलाहतद्विपच्चक्रं यन्मुक्तं चक्रमायुधम् । रोद्धुं शक्यं न केनापि, कालचक्रमिवापतत् ॥ २१ ॥ वाञ्छिताऽखिलवस्तूना–माकरा यस्य सर्वदा । चरन्ति भाग्यैराकृष्टाः, पदाधो निधयो नव ॥ २२ ॥ मदुक्तं मन्यसे राजन्, कर्णकट्वपि चेद्धितम् । तर्हि सेवस्व सम्राज–ममुमेकाग्रभावतः ॥ २३ ॥ त्वं स्वामिनोऽनुजन्मेति, स्नेहादित्युपदिश्यसे । यथात्ममतिभासं तु, कुरु कर्मानुसारधीः ॥ २४ ॥ एवं सुवेगदूतोक्ती–र्निशम्य मृदुकर्कशाः । जगाद जगतीजानि––रिति गम्भीरमार्दभिः ॥ २५ ॥ सम्पूर्णस्यापि सर्वाङ्गैः, सुदूरे स्वस्य तस्थुपः । अथो तदन्तिकादासात्, क्षेमप्रश्नो न दृष्यति ॥ २६ ॥ राज्यग्रहणसम्बन्धे––नैव लोभार्सचेतसः । ज्ञातस्तस्याऽनुजस्नेहः, किमेतैस्ते मृषोदितैः ॥ २७ ॥ अन्यान्यराज्यग्रहण–व्यग्रत्वादेव सोऽग्रजः । मन्ये कनिष्ठराज्यानि, नाग्रहीदियचिरम् ॥ २८ ॥ यदयं लब्धव्यापारा–ऽभावे तान्यधुना हरन् । जठराग्निः पराहारा–ऽभावे धातूनिवान्तरान् ॥ २९ ॥ तुच्छेनाप्यग्रजेनाऽस्मा, क्षुभ्यतेऽद्य कथं हहा ? । दाक्षिण्यादिति निर्लोभाः, माप्रजन्ननुजाश्च ते ॥ १३० ॥ नास्मि तादृक्सदाक्षिण्यो, निर्लोभप्रकृतिः परम् । लोभाभिभूतस्तदसा–वनात्मज्ञस्तव प्रभुः ॥ ३१ ॥ इदं पित्राऽर्पितं राज्यं, ममाप्याच्छेत्तुमुद्यतः । भद्र ! भ्रंशिष्यतेऽवश्य–मात्मगेहघृतादपि ॥ ३२ ॥ (युग्मम्) राज्यादानादनेनैव, बालानामनुजन्मनाम् । कुटुम्बे कलहो

न्यस्त-स्तद्दोषः कोऽत्र मे ? वद ॥ ३३ ॥ वृद्धस्नेहं लघिष्ठाश्चेत्, स्वासिन् पश्यन्त्यकृत्रिमम् । तत्ते भ्रमान्ति पृष्ठस्था, धेनूनामिव तर्णकाः ॥ ३४ ॥ तीर्थेशः परमब्रह्म-स्वरूपः प्रथमः पिता । स्वर्गापवर्गप्रतिभू-रेक एवास्ति नः प्रभुः ॥ ३५ ॥ मिथ्याभिमानी भरतो, धान्यकीटस्तु नः प्रभुः । अनया किंवदन्त्यापि, व्रीडामो हा वयं हृदि ॥ ३६ ॥ भ्रातृस्नेहादपि कृता, सेवास्य मया ध्रुवम् । अवद्धवक्त्रश्चक्रित्वा-द्वदन् वार्यः कथं जनः ? ॥ ३७ ॥ निःस्वाने नानका-भावाद्, राज्यं सोढा स चेन्न मे । षट्खण्डराज्यं तस्येदृक्, सहिष्ये न विशिष्य तत् ॥ ३८ ॥ मन्ये मदर्थमेवाय-मिय-दैश्वर्यमार्जयत् । सेनानीरिव निर्जित्य, चिरेणाखिलभूभुजः ॥ ३९ ॥ कष्टार्जिताया निर्भाग्यैः, श्रियो भोक्ता भवेत्परः । दलितेक्षो रर्दुःखा-ज्जिह्वैवाप्नोति यद्रसम् ॥ १४० ॥ भ्रमामि यदि तृष्णार्त्तो, भवद्भूप इव ध्रुवम् । साधयामि तदा भूमि-मामहाहिमवद्गिरिम् ॥ ४१ ॥ कृपालुचित्तः क्लीवेषु, स्वराज्यसुखतोषभाक् । ग्रहणे परराज्याना-मौदासीन्यं परं भजे ॥ ४२ ॥ लोभाभिभूतराजान-स्तं सेवन्तां सहस्रशः । सेवामहे किमर्थं तु, सन्तुष्टमनसो वयम् ? ४३ ॥ यद् दीनमुक्त्वा नत्वाऽन्यं, कृत्वा चाटूनि वाऽसकृत् । राज्यमप्याप्यते भाज्यं, न नस्तेन प्रयोजनम् ॥ ४४ ॥ भक्तिमांस्तातपादेषु, बलभिद् बहु मन्यते । तं तदाऽऽश्रयुतत्वेन, वीर्यैश्वर्यगुणैर्न तु ॥ ४५ ॥ तद्बलाढ्याः ससैन्याः स्युः, सक्तुमुष्टिः परे नृपाः । वडवाग्निर्भविष्यामि, तेजोभिर्दुस्सहस्त्वहम् ॥ ४६ ॥ राजाऽनुजीविभिर्मात्रा, पुत्रो दाता तथाऽर्थिभिः । सुतरां वर्ण्यमानोऽपि, प्रतिष्ठां नाधिरोहति ॥ ४७ ॥ स्वयं क्लीवस्य यत्सेना-पत्यायुधगजादिभिः । बलाधानं तदन्धस्य, प्रदीपोद्द्योतनं पुरः ॥ ४८ ॥ शोभामात्रं हि शूराणां, सेनाद्याडम्बरं रणे । यत्ते प्रचण्डौ दोर्दण्डौ, सहायौ हृदि मन्वते ॥ ४९ ॥ दोर्बलं तु निजभ्रातु-र्जाने नूनं

पुराऽप्यहम् ॥ क्रीडयोच्छालितः सोच्चैः, शतशो व्योम्नि यन्मया ॥ १५० ॥ हा मृतोऽद्य वराकोऽय–मिति संभाषितः सुरैः । पतन् प्रतिगृहीतश्च, पाणिभ्यामनुकम्पया ॥ ५१ ॥ (युग्मम्) परं साम्प्रतमैश्वर्या–न्तरितस्याऽस्य भूभुजः । तत्सर्वं विस्मृतं मन्ये, यदाज्ञापयतीति माम् ! ॥ ५२ ॥ एषैव सेवा खेतस्य, यदैश्वर्यमियत्तदहे । सम्प्रेषणं हि व्याघ्रस्यै–तदेवाश्नाति यत्र सः ॥ ५३ ॥ वीराभिमानी भरतो, मत्सेवामीहतेऽद्य चेत् । तन्मे सकृद् दर्शयतु, वीरश्रीं निजां युधि ॥ ५४ ॥ ततः सुवेग ! वेगेन, गत्वा ब्रूहि निजेशितुः । स्वच्छासनं न सहते, पर्याणं केसरीव सः ॥ ५५ ॥ कुमारामात्यसामन्ताः, श्रीपादिति गिरः प्रभोः । संग्रामपिशुना हर्षो–च्छासैरेवानुमेनिरे ॥ ५६ ॥ जीवन् मुक्तोऽथाङ्गरक्षैः क्रुद्धैरप्याज्ञया प्रभोः । धैर्यमालम्ब्य सदसः, सुवेगः सहसोत्थितः ॥ ५७ ॥ नन्वः कोऽयं पुमान् ? दूतो, भरतस्यैष को नु सः ? । अग्रजः श्रीबाहुबले–स्तदा स क्वास्ति साम्प्रतम् ? ॥ ५८ ॥ भुङ्क्ते राज्यमयोध्यायां, किं मैर्षादिनमत्र सः ? । श्रीबाहुबलिमाह्वातुं, सेवां कारयितुं निजाम् ॥ ५९ ॥ स दुर्दैवहतस्तर्हि, किं निजस्यानुजन्मनः । दोर्वीर्यं त्रिजगज्जेतृ, जानाति नहि मूढधीः ? ॥ १६० ॥ बाल्येऽनुभूतं तत्तस्य, ज्ञानमेवाभवत्परम् । विस्मृतं चाडुकृद्वाक्यै–रस्याथोत्तेजितस्य तत् ॥ ६१ ॥ नंष्टा यास्यन्ति ते युद्धे, सर्वे चाडुकृता ध्रुवम् । सोढा स एकः श्रीबाहु–बलिबाहुबलाद्व्यथाम् ॥ ६२ ॥ मन्त्रणे भूपकोऽप्यस्य, तत्किं नास्ते सुबुद्धिदः ? । सन्त्येव सचिवास्तस्य, बहवो बुद्धिशालिनः ॥ ६३ ॥ सोऽनात्मनीनं कर्मेदृक्, तत्कुर्वन् किं न वारितः ? । प्रवर्तितोऽस्मिंस्तैरेव, यद्भाव्यं नान्यथा भवेत् ॥६४॥ तन्मूढेनाद्युना नूनं, सुप्तः सिंहोऽद्य बोधितः । समीराभिमुखीभूय, ज्वालितश्च दवानलः ॥ ६५ ॥ शक्रोऽप्यखण्डं भूखण्डं

जेतुं बाहुबलिर्बली । सुखोपविष्टः स्वस्थाने, यदेवं दुर्जनैक्षितः ॥ ६६ ॥ शृण्वन्नित्युक्तिप्रत्युक्ती–र्मिथः पौरजनैः कृताः । अथासौ त्वरितं तक्ष–शिलापुर्यां विनिर्ययौ ॥ ६७ ॥ ( दशभिः कुलकम् ) गच्छन्नथेत्थमध्यासी–त्स विषण्णमनाः पथि । अविमृष्टमिदं कर्म, भारब्धं भूभुजा हहा ! ॥ ६८ ॥ षट्खण्डभूपैः सेव्यस्य, किं न्यूनं भूभुजोऽस्य यत् ? । आहूतोऽयं स्वसेवायै, वाहनायेव केसरी ॥ ६९ ॥ हहा धिक् पण्डितंमन्यान्, मन्त्रिणस्तान् कुमागतान् । कर्मण्यस्मिन् सुदुःसाध्ये–ऽधुना यैः प्रेरितः प्रभुः ॥१७०॥ भाव्येतन्न शुभायाऽस्य, गृहीतश्चाथ मुञ्चतः । छुच्छुन्दरीगृहीतास्ये, सर्पस्येव, यदुच्यते ॥७१॥ जइ गलइ गलइ उयरं, पच्चुगालिए गलंति नयणाई । हा विसमा कज्जगई अहिणा छुच्छुन्दरी गहिया ॥७२॥ गलाऽनेन मिथो भ्राता–विरोधश्चालितोऽधुना । ममेत्यवर्णो भावीति, धिग्दौत्यं गुणदूषणम् ॥ ७३ ॥ इत्याद्यनेकसङ्कल्प–विकल्पविधुराशयः । अयोध्यायां क्रमेणैत्य, श्यामास्यः सोऽनमत्प्रभुम् ॥ ७४ ॥ नन्वयं तेन पर्यस्त, आगादित्यास्यवीक्षणात् । ज्ञात्वाऽप्यक्षुभिताश्चित्ते, भरतेशस्तमूचिवान् ॥ ७५ ॥ भद्र ! शाखाप्रशाखाभि–र्विस्तीर्णो वटवृक्षवत् । कुशली सबली बाहु–बलीति वद मे मुदे ॥ ७६ ॥ सादरं स्वामिनाऽर्थवं, पृष्टो हृष्टमना मनाक् । सुवेगः स्पष्टमाचष्टे, विनयावनमच्छिराः ॥ ७७ ॥ नूनं यक्षकिणश्चक्र–मपि वज्रं च वज्रिणः । भ्रष्टपर्पटवच्चूर्णं, मुष्टिमात्रेण चूर्णयेत् ॥ ७८ ॥ सेनानी–सैन्यपादी वर्णिते मया । किमेतावदिति दुर्गन्धा–दिव नक्रं भनक्ति यः ॥ ७९ ॥ महत्ताद्यास्तव भर्तान्नाद्या, दोष्मन्तो यत्र कोटिशः । कुमाराश्च पतद् व्योमा–प्यवष्टब्धुं क्षमा ध्रुवम् ॥ १८० ॥ पुत्रपौत्रवीरस्य, तस्य त्वदनुजन्मनः । देवदेवोऽपि हि क्लीबः, स्यादमङ्गलकर्मणि ॥ ८१ ॥ मन्ये वीराधि- ( चतुर्भिः कलापकम् ) अथ बाहु-

बलेस्तासा, उच्चावचवचस्तती: । निवेद्य स्वामिनः सम्य–गिति तत्त्वमुवाच सः ॥ ८२ ॥ बहूक्तः स्वामिसेवायै, स
वाक्यैर्मृदुकर्कशैः । मन्यते तु न गम्भीर–वेदी गज इवाङ्कुशम् ॥ ८३ ॥ दर्पकण्डूलदोर्दण्डः, स प्रतापी तवानुजः । युयुत्सया
समेत्यत्र, न तु सेवाविधित्सया ॥ ८४ ॥ तेजस्विनो महोत्साहाः, सामन्तनृपपत्तयः । तस्याश्रयात्र भिद्यन्ते, भृशभक्तिभृतः प्रभो!
॥ ८५ ॥ युद्धश्रद्धालवस्तस्य, ज्वलन्त इव तेजसा । कुमारा द्वेपिभिः सार्द्धं, वैरं कृत्वापि गृह्णते ॥ ८६ ॥ आसतां वेतनक्रीताः,
सामन्तनृपपत्तयः । यस्येष्टं कर्तुमीहन्ते, नूनं प्राणैरपि प्रजाः ॥ ८७ ॥ भिद्यन्ते अप्यद्रिवास्तव्या, जातु दृष्ट्याप्यनीक्षिताः ।
गुणैर्वश्याः पुरस्तस्य, जिघांसन्ति भवन्त्वमूम् ॥ ८८ ॥ इष्टं मा जात्वनिष्टं ते, सत्यमेतत्त्वहं ब्रुवे । मिथ्यावाक्यैर्न यत्स्वामी,
वञ्चनीयोऽनुजीविभिः ॥ ८९ ॥ तूर्णं ज्ञात्वाऽनुजस्येदृक्, कुरुष्वाथ यथोचितम् । सत्यवाचिकवक्तारो, दूतास्तु नहि मन्त्रिणः
॥ १९० ॥ दूतवक्त्रादित्यवज्ञा—वचनान्यनुजन्मनः । निशम्यापि नराधीशो, निर्विषादो जगाद तम् ॥ ९१ ॥ जगज्जैत्रा-
ऽतुलक्षात्र–तेजसोऽस्यानुजन्मनः । युक्तमेवान्यराजन्य—शासनाऽसहनं ध्रुवम् ॥ ९२ ॥ आलानं शरभः श्रेष्ठः, सिंहो-
ऽन्यश्वापदस्वनम् । जात्याश्वश्च कशाघातं, सहते यत्र कर्हिचित् ॥ ९३ ॥ बलिष्ठेन कनिष्ठेना–ऽमुना श्लाघ्योऽस्मि सर्वथा ।
यद्गरीयान् भात्येको, भुजेऽन्यस्मिन् लघीयसि ॥ ९४ ॥ दाराः सम्पत्तयः पुत्रा, पत्तयः सुलभा भुवि । नाप्यते हि क्वचिद्
बन्धु–विशिष्टेद्यवलः पुनः ॥ ९५ ॥ यच्च सेवार्थमाहूता, लघिष्ठभ्रातरः पुरा । प्राव्रजन् सहसाऽप्यापि, [illegible] ह्रीर्हृदि
न माति मे ॥ ९६ ॥ तद् दोष्मानेष सोऽस्त्वस्त, ममाज्ञा भुवि विश्रुताम् । एवमुच्चावचैर्वाक्यैः, पुनर्मामवमन्यताम्
॥ ९७ ॥ सहनेऽस्यागसो लोका, मामशक्तं वदन्तु वा । विरोधं बन्धुना सार्द्धं, विधास्ये नाऽमुना

परम् ॥ ९८ ॥ इति स्वोक्तस्य नृपते–र्युक्ताऽयुक्तविविक्तये । स्निग्धदृष्ट्याऽथ चैक्षिष्ट, सदस्यमुखसम्मुखम् ॥ ९९ ॥ अवज्ञया बाहुबलेः, प्रभोश्च क्षमया तया । दूनः सुषेणः सेनानी–स्तदा राजानमित्यवक् ॥ २०० ॥ दीनदुःस्थार्त्तभीतान्ध–कुणिपङ्गुषु जन्तुषु । दयार्हेष्वेव युज्येत, क्षमा देव ! क्षमाभुजाम् ॥ १ ॥ दोर्वीर्योच्छृङ्खलाश्चाज्ञा–विद्विषो दुष्टबुद्धयः । प्रजाहितोद्यतैर्भूपैः, शिक्षणीयास्तु निर्दयम् ॥ २ ॥ दमनं दुष्टबुद्धीनां, सद्बुद्धीनां च पालनम् । आश्रितानां च भरणं, राज्ञामेतद्धि लक्षणम् ॥ ३ ॥ यदुक्तम्—शठदमनमशठपालन–माश्रितभरणानि राजचिह्नानि । अभिषेकपट्टबन्धो, बालव्यजनं व्रणस्यापि ॥ ४ ॥ किञ्च–वित्तैर्भृत्यैः सुतैर्मित्रैः, कलत्रैरपि चाऽसुभिः । महान्तो हि समीहन्ते, तेजो वर्धयितुं निजम् ॥ ५ ॥ न्यूनं किं च स्वराज्येन, तवाभूद् देव ! यत्त्वया । इयान् दिग्विजयश्चक्रे, तेजोवृद्ध्यर्थमेव सः ॥ ६ ॥ पराभिभूतैर्भयतः, सुखमुज्झन्ति जीवितम् । कथमप्यात्मतेजस्तु, मानमूलं हि मानिनः ॥ ७ ॥ महद्भिः सर्वदा सर्वै–रुपायैर्निजतेजसः । योगक्षेमविधिश्चिन्त्यो, धनस्येव वणिग्जनैः ॥ ८ ॥ मृदुता शस्यते स्वामिन्, वणिजां शीतलात्मनाम् । सैव तेजःप्रधानानां, राजन्यानां च हस्यते ! ॥ ९ ॥ तेजस्विप्रकृतेः पुंसः, शङ्कन्ते प्रायशो द्विषः । मृदुस्वभावस्तैरेव, सर्वदा परिभूयते ॥ २१० ॥ यदुक्तम्–तुल्येऽपराधे स्वर्भानु–र्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते, तन्म्रदिम्नः स्फुटं फलम् ॥ ११ ॥ तवायं क्षितिभृन्मौलि–मिलत्पादस्य भास्वतः । तीव्रधाम्नो ध्रुवं राहु–रिव धामविघातकृत् ॥ १२ ॥ ध्रियमाणं नृपैः सर्वै–मौल्यवन्मूर्ध्नि शासनम् । अमन्यमानस्ते नूनं, रिपुरेवानुजोऽप्यसौ ॥ १३ ॥ दर्पान्निजभुजस्थाम्न–स्त्वामयं च तृणीयते । शाध्यमुं तद् दुरात्मानं, सम्राड् यदसि भारते ॥ १४ ॥ शस्त्रसद्याऽविशच्चक्र–मपि द्वेषिनिषूदनम् । स्वामिन् मदुक्तमेवार्थं, समर्थयति सम्प्रति ॥ १५ ॥

अयुक्तं निगदन् किञ्चिद्, भवेयं भरतेश ! चेत् । युक्तया धीनिधयोऽमात्या-स्तदेते वारयन्तु माम् ॥ १६ ॥ तदा न्यगादीन्नीतिज्ञः,
स्वामिनं सचिवाग्रणीः । युक्तमेवाह सेनानीः, प्रभुभक्तः पराक्रमी ॥ १७ ॥ वेश्याजन इवाऽस्नेहे, यत्स्नेहोऽस्मिंस्तवानुजे । नूनं
तदेकहस्तेन, तालिकावादनं प्रभो ! ॥ १८ ॥ हृदि दुष्टान्मुखे मिष्टा-ञ्जाने वेश्याजनादपि । मुखे हृदि च दुष्टोऽयं, कनिष्ठस्तेऽतिरि-
च्यते ॥ १९ ॥ यत्सर्वक्ष्माभुजां जेतु-र्नेतुश्चास्मिन्पराजयः । उत्तीर्णस्याथ पाथोधिं, गोष्पदे तन्निमज्जनम् ॥ २२० ॥
नूनं भ्रात्रा समं योध्दुं, सैन्ययुक्तस्य गच्छतः । अवर्णवादो मे भावी-त्यपि मा धा मुधा हृदि ॥ २१ ॥
सपत्न्योर्भगिनीत्वं यद्, यद् भ्रातृत्वं च तद्भुवोः । सासाद्वैरेसणात्तद्धि, नाम्नैवास्ते न वस्तुतः ॥ २२ ॥ प्रायः स्वभावास्स-
र्वेषां, सापत्नभ्रातरो द्विषः । मिथस्तेजोऽसहिष्णूनां, विशिष्य क्ष्माभुजां पुनः ॥ २३ ॥ आज्ञाऽक्षमन्तरि भ्रात-र्यपि विद्विषि
वस्तुतः । लोकैः शास्त्रैश्चानुमतं, राज्ञां यथाभिषेणनम् ॥ २४ ॥ तेजोज्यानिकरः सद्य-स्तदुच्छेद्यस्त्वया ह्यसौ । महानर्थाय
विद्वेषी, व्याधिश्च यदुपेक्षितौ ॥ २५ ॥ तदा सदस्यैः सामन्त-क्ष्मापाद्यैरपरैरपि । स्वामिभक्तैर्महोत्साहै-रियदेव न्यगद्यत ॥ २६॥
सेनापत्यादिभिः स्निग्ध-मपि भ्रातरि भूभुजः । चित्तं विरोधवैरस्य-मिति सद्योऽप्यनीयत ॥ २७ ॥ यदुक्तम्-वल्लीनरिंद-
चित्तं वक्खाणं पाणिअं च महिलाओ । तत्थय वचंति सया जत्थय धुत्तेहिं निज्जन्ति ॥ २८ ॥ अथो जिगमिपुर्जेतुं, साम्पर्ः स
नृपोऽनुजम् । प्रयाणपिशुनां ढक्कां, निर्विलम्बमवीवदत् ॥ २९ ॥ तद्वैव ढक्कानिर्घोष-सङ्केतेन ससम्भ्रमम् । सर्वतोऽपि समागत्य,
मिलितं सकलं बलम् ॥ २३० ॥ प्रतिरूपाणीव राज्ञ-स्तत्र शौर्यादिभिर्गुणैः । आदित्ययशःप्रमुखाः, कुमाराः कोटिशोऽ-
मिलन् ॥ ३१ ॥ स्वामिकृत्येषु सोत्साहा, दत्तदाहा हृदि द्विषाम् । आबद्धरत्नमुकुटा, भूभुजश्च सहस्रशः ॥ ३२ ॥ संयुक्ताः

जितकाशिता–जितंमन्य इहापि सः । नरेन्द्रो बहुलीदेश–सीमोपान्तं समागमत् ॥ २५० ॥ ( पञ्चभिः कुलकम् ) स्वसीमोपान्तमायातं, विजिगीषुमथाग्रजम् । ज्ञात्वा निजचरै राजा, बलीयान् बाहुबल्यपि ॥ ५१ ॥ तदैव ढक्कामाताड्य, संमुखं निरगात् पुरात् । दोष्मन्तो न सहन्ते हि, स्वसीमाऽतिक्रमं परैः ॥ ५२ ॥ ( युग्मम् ) पत्युरेव पुरः काचित्, सङ्ग्रामोत्सुकवत् सुतम् । युधि शौर्यं तथा कुर्याद्, विकल्पो न भवेद्यथा ॥५३॥ काप्याह पुत्री वीरस्य, पत्नी चाऽस्मि पुरा सुत ! । तत्तथा युधि युध्येथा, यथा स्यामथ वीरसूः ॥ ५४ ॥ धृत्वा मां हृदि मा युद्धे, कान्त ! पश्चात्पदं कृथाः । यन्मे गतिस्त्वमेवात्रा–ऽमुत्र चेति च काप्यवक् ॥ ५५ ॥ कश्चिच्चिचलिपुः सैन्ये, स्नेहेन स्वप्रियामुखे । पत्रवल्लीं सृजन्नेवं, सहास्यं सुहृदोदितः ॥ ५६ ॥ अश्वा एवाद्य भूष्यन्ते, ननु नार्यो यदाहवे । द्विपत्प्रहाराः सोढव्या–स्तैरेव सममात्मभिः ॥ ५७ ॥ तदाह स्त्री कापियद्वा, मार्यन्तेऽश्वा बलाद्रणे । म्रियन्तेऽनुपतिं यास्तु, स्वैरं तासां बलिः कृपे ॥५८॥ शौर्यात्कश्चिच्छिशुः काष्ठ–कृपाणं कम्पयन् करे । मपान्ते जनकं योद्धु–मेष्याम्यहमपीत्यवक् ॥ ५९ ॥ इत्थमुत्तेजिता मातृ–पत्न्याद्यै रणकर्मणि । स्वामिभक्तिभृतः शूरा–श्चेलुस्तमनु कोटिशः ॥ २६० ॥ संयुक्तः सत्त्वशौर्याद्यै–श्चतुरङ्गचमूस्ततः । प्राप सीम्नि स्वदेशस्य, सुनन्दासूरपि द्रुतम् ॥ ६१ ॥ स्कन्धावारादपार्पभ्या–मुत्तीर्णौ संमुखौ मिथः । पूर्वापराविवाम्भोधी, अभातां प्रलयोद्यतौ ॥ ६२ ॥ सर्वराजकसामग्र्या–च्छूरं सिंहरथं सुतम् । अथ बाहुबलिर्नेतृं, सेनानीत्वे न्यवीविशत् ॥ ६३ ॥ सौवर्णपट्टं चैतस्य, सर्वराजन्यसाक्षिकम् । स मूर्ध्नि न्यस्तवान्मूर्त, स्वप्रतापमिव स्वयम् ॥ ६४ ॥ कुमारामात्यराजेषु, सन्मानेन प्रमोदस्तदा । सोऽदीपिष्टाधिकं सोम–स्तारकेष्विव तेजसा ॥ ६५ ॥ कुमारामात्यसामन्तान्, भरतोऽप्यन्वशात्तदा । युष्माभिरेषा निःशेषा, साधिता भारतावनी ॥ ६६ ॥

सर्वसामग्र्या, रथिसादिनिषादिनः । लक्षाश्चतुरशीतिश्च, पराऽसह्यपराक्रमाः ॥ ३३ ॥ उच्छाल्योच्छाल्य गृह्णन्तो, व्योम्नि शस्त्राणि हेलया । भक्ता जितश्रमाः शूराः, पत्तयश्चापि कोटिशः ॥ ३४ ॥ (चतुर्भिः कलापकम्) परीतः सर्वसैन्येन, परितः कम्पयन् रिपून् । चक्रवर्ती चचालाथ, वहुलीनीवृतं प्रति ॥ ३५ ॥ सर्वविद्वेषिविध्वंसो—त्कण्ठोद्भूतत्वरं तदा । चलतोऽस्य पुरश्चक्रं, प्राचलद् व्योमवर्त्मनि ॥ ३६ ॥ इयत्कटकसंरम्भः, कुत्रायं चलितो नृपः ? । क्षितिं निरीक्षितुं स्वैरं, निर्गतो भविता स्वयम् ॥ ३७ ॥ विद्विषिपादघटितं, चक्रं किमु परोऽस्य तत् । जेतव्यो भरतेऽप्यस्य, न रिपुः कोऽपि वीक्ष्यते ? ॥ ३८ ॥ अथ न त्वस्ति जेतव्यः, सम्राजोऽप्यस्य कोऽपि चेत् । तदस्यैवानुजो बाहु–बलिः स बलभिद्बलः ॥ ३९ ॥ जेतुं तमेव भूभर्तुः, संरम्भस्त-दसौ ध्रुवम् । तदायं कुरुते नून–मविमृश्यमिदं हहा ! ॥ २४० ॥ यदस्य विजयेऽप्यत्र, प्रतिष्ठाऽल्पैव भाविनी । महत्त्वहानिर्महती, पुन-र्जातु पराजये ॥ ४१ ॥ अन्यच्च भ्रातृपुत्राद्या, दक्षैः क्वचन दुर्नये । शिक्षणीया रहस्येव, द्वयानां लघुताऽन्यथा ॥ ४२ ॥ आत्मसात्कृतषट्खण्ड–राज्यस्यास्य महीभुजः । विनाऽनुजन्मनो राज्यं, न्यूनं नामाऽभवत् किमु ? ॥ ४३ ॥ लोभोऽद्यापी-षदैश्वर्य–भृतोऽप्यस्य हहा कियान् । महतामपि वा नूनं, कषायाः सुदुस्त्यजाः ॥ ४४ ॥ तदाऽस्मिंश्चलिते क्ष्मापे, ग्रामे ग्रामे पुरे पुरे । जनानामिति सर्वत्र, गिरः पथि मिथोऽभवन् ॥ ४५ ॥ (नवभिः कुलकम्) भूरिभारेण सैन्यस्य, नमयन् क्षेपकन्धराम् । भमन्दैर्वाग्रनिर्याणै–र्योपाऽद्वैतं सृजन् भुवि ॥ ४६ ॥ तृणतोयानि सर्वत्र, सीम्नि दुर्लभयन् बलैः । पुनः गुल्मयंस्तानि, द्विपदास्यभियाशिशु ॥ ४७ ॥ कल्पान्तक्षुभिताम्भोधि–वेलयेव स्वसेनया । मन्यमानः क्षितिभृतं, द्रुतं प्लावि-तमेव तम् ॥ ४८ ॥ कनिष्ठमिलनायैवो–त्कण्ठितो हृदिनो भृशम् । प्रयाणैरनवच्छिन्नै–र्गच्छन् वेगेन वर्त्मनि ॥ ४९ ॥ सर्वत्र

जिनकानित्वा-त्क्रितंमन्य इहापि सः । नरेन्द्रो वहुलीदेश-सीमोपान्तं समागमत् ॥ २५० ॥ ( पञ्चभिः कुलकम् ) स्वसीमोपान्तमायातं, विजिगीषुमथाग्रजम् । ज्ञात्वा निजचरै राजा, वलीयान् वाहुवल्यापि ॥ ५१ ॥ तदैव ढक्कामाताड्य, संमुखं निरगात् पुरात् । दोष्मन्तो न सहन्ते हि, स्वसीमाऽतिक्रमं परैः ॥ ५२ ॥ ( युग्मम् ) पत्युरेव पुरः काचित्, सङ्ग्रामोत्कमवक् सुतम् । युधि शौर्यं तथा कुर्याद्, विकल्पो न भवेद्यथा ॥५३॥ काप्याह पुत्री वीरस्य, पत्नी चाऽस्मि पुरा सुत ! । तत्तथा युधि युध्येथा, यथा स्यामथ धीरसूः ॥ ५४ ॥ धृत्वा मां हृदि मा युद्धे, कान्त ! पश्चात्पदं कृथाः । यन्मे गतिस्त्वमेवात्रा-ऽमुत्र चेति च काप्यवक् ॥ ५५ ॥ कश्चिच्चिचालिषुः सैन्ये, स्नेहेन स्वप्रियामुखे । पत्रवल्लीं सृजन्नेवं, सहास्यं सुहृदोदितः ॥ ५६ ॥ अश्रा एवाद्य भूष्यन्ते, ननु नार्यो यदाहवे । द्विपत्महाराः सोढव्या-स्तैरेव समयात्मभिः ॥ ५७ ॥ तदाह स्त्री करिरदा, मार्यन्तेऽश्वा वलाद्रणे । म्रियन्तेऽनुपतिं यास्तु, स्वैरं तासां वलिः क्रिये ॥५८॥ शौर्योत्कश्चिच्छिशुः काष्ठ-कृपाणं कम्पयन् करे । मपान्तं जनकं योद्धु-मेष्याम्यहमपीत्यवक् ॥ ५९ ॥ इत्थमुत्तेजिता मातृ-पत्न्याद्यै रणकर्मणि । स्वामिभक्तिभृतः शूरा-श्चेलुस्तमनु कोटिशः ॥ २६० ॥ संपुक्तः सत्त्वशौर्याद्यै-श्चतुरङ्गचमूवृतः । भाप सीम्नि स्वदेशस्य, सुनन्दासूरपि द्रुतम् ॥ ६१ ॥ स्कन्धावारद्वयापर्भ्या-वुत्तीर्णौ संमुखौ मिथः । पूर्वापराविवाम्भोधी, अभातां मल्पोद्यतौ ॥ ६२ ॥ सर्वराजकसंमत्या-च्छूरं सिंहरथं सुतम् । अथ वाहुबलिर्नेकं, सेनानीत्वे न्यवीविशत् ॥ ६३ ॥ सौवर्णपट्टं चैतस्य, सर्वराजन्यसाक्षिकम् । स मूर्ध्नि न्यस्तवान्मूर्त, स्वमतापमिव स्वयम् ॥ ६४ ॥ कुमारामात्यराजेषु, सन्मानेन मभोस्तदा । सोऽद्दीपिष्टाधिकं सोम-स्तारकेष्विव तेजसा ॥ ६५ ॥ कुमारामात्यसामन्तान्, भरतोऽप्यन्वशात्तदा । युष्माभिरेषा निःशेषा, साधिता भारतावनी ॥ ६६ ॥

भूमिवारिक्षितीशेषु, विद्याधरसुरेषु वा । भतिमल्लः पुनस्तस्यां, कोऽप्यासीद् दोष्मतां न वः ॥ ६७ ॥ एकोऽपि क्षमः क्षेप्तुं, युधि योऽक्षौहिणीर्द्विषाम् । आसतां बाहुबलिनः, पुत्रपौत्रादयस्तु ते ॥ ६८ ॥ महोत्साहस्य पादाति-मात्रस्यापि महौजसः । वीर्यधैर्यादिभिर्जाने, तुल्यस्तेषु न कोऽप्यभूत् ॥ ६९ ॥ तत्स एव क्षितौ वीरो, योद्धा सैन्यैः सहास्य यः । सूनृतं तन्महालक्ष्मी-दृष्टौ सञ्चरितं हि यत् ॥ २७० ॥ स्वामिभक्ती रणोद्युक्ति-र्बाहुशक्तिश्च वस्तुतः । सहैतस्य बलैर्युध्य—मानानां ज्ञास्यतेऽधुना ॥ ७१ ॥ तदस्मिन्नाहवे बाहु-बलेरस्य बलीयसः । अयं सुषेणसेनानी-रत्नं क्षात्रमहोनिधिः ॥ ७२ ॥ भक्तैः कृतज्ञैर्विक्रान्तैः, स्वप्रभोर्जयमिच्छुभिः । सर्वकृत्येषु युष्माभि-र्द्रष्टव्योऽहमिवाधुना ॥ ७३ ॥ (युग्मम्) कुमारामात्यसामन्ता-नित्यादिश्य तदैव सः । मौलिं मूर्ध्नि सुषेणस्य, सैन्यभारमिव न्यधात् ॥ ७४ ॥ इत्याप्तस्वामिसन्मानः, स सेनानीर्महाबलः । समभूद् द्विगुणोत्साहः, सपत्नोच्छेदकर्मणि ॥ ७५ ॥ अथ तत्सैन्ययोर्योधा, युद्धश्रद्धालवो मिथः । प्रातः प्रागेव सेनान्या-देशाद्योद्धुं ढुढौकिरे ॥ ७६ ॥ सङ्ग्रामनान्दीनिनद—श्रवणाच्छौर्यशालिनाम् । न सन्नाहाः शरीरेषू-च्छ्वसितेषु ममुस्तदा ॥ ७७ ॥ गजा गजैर्हयाश्वाश्वैः, पद्गाः पद्गै रथा रथैः । न्याययुद्धेन तत्रैवं, योधा युयुधिरेतराम् ॥७८॥ दीनवाचोऽन्यमनसो, वदनात्ताङ्गुलीतृणाः । नश्यन्तः पतिताश्चात्र, योधा योधैर्न जघ्निरे ॥ ७९ ॥ केचित्तत्र द्विपक्षीताः, कातरा नष्टुमिच्छवः । भट्टैरुत्तेज्य मार्यन्ते, पितृवंशादिकीर्तनैः ॥ २८० ॥ सदाऽप्येवं द्वये योधाः, स्वस्वस्वामिजयार्थिनः । युध्यमाना मिथस्तत्र, बहवोऽपि क्षयं ययुः ॥ ८१ ॥ स्वस्वसेनापतिन्यस्त-सर्वकृत्यौ परं नृपौ । तौ धीरललितौ क्रीडा-न्वाज्ञासिष्टामपि ध्रुवम् ॥ ८२ ॥ इयत्प्राणिक्षयं जाय—मानं मत्वाऽथ तत्र तम् । त्रिदशास्तन्निवृत्त्यर्थं, सानुकम्पाः समागमन् ॥ ८३ ॥

मिथो जयार्थिनः सुरान्, युध्यमानानथ क्रुधा । दृष्ट्वा श्रीऋषभस्याज्ञां, पूर्वं ते विन्यवारयन् ॥ ८४ ॥ तदैवं व्यमृशन् योधा,
मुष्टिमुक्ता जिनाज्ञया । अस्मद्वृष्टया अमी देवाः, किमुताऽमित्रपाक्षिकाः ? ॥ ८५ ॥ पापैरभीभिर्यैस्तैर्वा, वैरं तावद्रोप्यत ।
युद्धान्तरायं तन्वानै-र्युद्धोत्कमनसां हि नः ॥ ८६ ॥ चिरं जय जयेत्याशी—र्मुखराः प्रथमं सुराः । भरतेशमुपेत्याथ, विनयेनेत्थ-
मूचिरे ॥ ८७ ॥ षट्खण्डभरतक्ष्मापै—र्हेलयैव जितैर्न ते । मृगालैरिव सिंहस्य, युद्धश्रद्धा ह्यपूर्यत ? ॥ ८८ ॥ तत्पूर्त्यै
वर्लिष्ठेन, कनिष्ठेनामुना समम् । महायुद्धमिदं घोरं, तदारब्धं त्वया ध्रुवम् ॥ ८९ ॥ इदं पुनर्विचारज्ञ ! , तव नूनं न युज्यते ।
भुजेन दक्षिणेनैतद्, यद्वामभुजकर्त्तनम् ॥२९०॥ सार्वस्य सुतयोः सर्व—जनीनमनसस्तु वाम् । युज्यते न विशिष्यार्यं, जन्तुजात-
क्षयोद्यमः ॥९१ ॥ किञ्च—निर्ममस्य निरीहस्य, राजंस्तस्यार्हतः सुतौ । राज्यलोभान्न लज्जेथे, युध्यमानौ युवां मिथः ? ॥ ९२ ॥
न्यासवद्धन्यनिक्षेप्यस्य, नृपैश्चादुपरैश्च ते । किमु नाम विना सेवां, न्यूनमस्यानुजन्मनः ? ॥ ९३ ॥ अकालप्रलयादस्मात्,
सम्प्रत्यापतितोऽमुना । निवर्तस्व नराधीश ! , राजधानीं निजां व्रज ॥ ९४ ॥ समयज्ञः समायातः, समायातयति त्वयि ।
मयाते भानुजोऽप्येष, स्वयं पश्चात्वयास्यति ॥९५॥ समरारम्भसंरम्भ—निवृत्तौ युवयोर्मिथः । सैन्ययोरुभयोः सद्यः, संहारोऽपि
निवर्त्तताम् ॥९६॥ अकालोपस्थितं पृथ्व्या—मित्थं शाम्यतु विद्रवम् । स्वस्थास्तिष्ठन्तु राजानः, सुखिताः सन्तु च प्रजाः ॥९७॥
त्रिदशोक्तीरिति श्रुत्वा, सभापे भरतेश्वरः । कोऽन्यो हितैषिणो युष्मान्, विना वक्तीति निर्जराः ! ॥ ९८ ॥ परेषां कलहे प्रायः,
सर्वः कौतुकमीक्षितुम् । यज्जनो मिलति क्षिप्रं, कोऽपि भक्त्यंतुं न तं पुनः ॥ ९९ ॥ युयुत्सुर्नाऽनुजेनाऽस्मि, दोष्मानस्मीति
गर्वितः । क्षिप्यते क्षुरिका किन्तु, स्वोदरे स्वर्णमय्यपि ? ॥ ३०० ॥ आददे राज्यमस्येति, लुब्धश्चासि न खल्वहम् ।

दित्साम्यपरमप्यस्य, राज्यमेत्य न तस्य यत् ॥ १ ॥ किन्त्वायातस्य मे वेश्म, कृत्वा दिग्विजयं चिरात् । अयमागान्मदोन्मत्तो,
नाग्रजस्यापि मेलितुम् ॥ २ ॥ आगोऽस्याऽवर्णभीरुत्वात्, सोढवांश्चैतदप्यहम् । स्वामिभक्ताः परं शूराः, सहन्ते
नानुजीविनः ॥ ३ ॥ सहन्ते तेऽप्ययो जातु, शस्त्रसद्माऽविशत्पुनः । अविशोध्य द्विपच्छेदं, चक्ररत्नं न तुष्यति ॥ ४ ॥
न .मां नाम नमत्येप, दर्पान्निजभुजौजसः । नाप्येकस्मिन्न नम्रे तु, चक्रमेत्यायुधौकसि ॥ ५ ॥
शस्त्रसद्माविशत्यस्मिन्, व्रीडा चातीव चक्रिणः । तन्मया युद्धमारब्धं, विरुद्धमपि बन्धुना ॥ ६ ॥ युक्तियुक्तं विभाव्योक्तं,
सुरा भरतचक्रिणः । अथ बोधयितुं युक्त्या, श्रीबाहुबलिनं ययुः ॥ ७ ॥ अथ तेषां सुनन्दासू-रपि स्वागतमातनोत् । भ्रश्यन्ति
विनयौचित्या-न्न सन्तो हि गृहागते ॥ ८ ॥ अथाहुर्बलिनं बाहु-बलिनं विनयेन ते । अनर्हः कलहः कोऽय-मग्रजेन तवाधुना ?
॥ ९ ॥ कुशलस्य कुलीनस्य, तवाप्यतिबलीयसः । पूज्येऽस्मिन् विनयौचित्या-चरणं हि विलोक्यते ॥ ३१० ॥ यतः—
नमन्ति फलिता वृक्षा, नमन्ति कुशला नराः । शुष्कं काष्ठं च मूर्खाश्च, भज्यन्ते न नमन्ति च ॥ ११ ॥ तदेत्याशु भवानेतं,
नमस्यार्हं नमस्यतु । न हि जातु शुभोदर्कः, पूज्यपूजाव्यतिक्रमः ॥ १२ ॥ आप्ता अप्यद्भुतैश्वर्यं, नमन्ति कुलजाः सदा ।
न तादृग्वैभवाभावे-ऽप्यकुलीनास्तु कर्हिचित् ॥ १३ ॥ यदुक्तम्— कोटिद्वितयलाभेऽपि, नतं सद्वंशजं धनुः । अवंशजः
शरःस्तब्धो, लक्षस्यापि हि लिप्सया ॥ १४ ॥ यदि वाऽद्भुतमैश्वर्यं, स्वस्य राजन्समीहसे । हेलाजिताऽतुलैश्वर्यो, दातुमी-
शस्तदप्यसौ ॥ १५ ॥ इयच्चाद्भुतमैश्वर्यमार्जितं स्वभुजौजसा । स्वभ्रात्रे संविभाज्यायं, भोक्तुमिच्छुः स्ववत्सलः ॥ १६ ॥
संत्यज्य स्तब्धतां द्रव्य-भावभिन्नां गृहागतम् । सेवस्व स्वाग्रजं सौम्य !, तत्सेवकसुरद्रुमम् ॥ १७ ॥ अत्रामुत्राशुभोदर्का,

युवयोराहवादियम् । मर्त्यवाजीभकोटीनां, संहृतिश्च निवर्त्तताम् ॥ १८ ॥ हितशिक्षागिरः सम्यग्, निशम्येति सुपर्वणाम् । वीराग्रवीरो बहुली-पतिर्गम्भीरमित्यवक् ॥ १९ ॥ अधिकाधिकराजश्री-लुब्धो नैकनृपैर्वृतः । योद्धुमागादयं सार्द्धं, समासीनेन चेन्मया ॥ ३२० ॥ तदेतेनाग्रजेनापि, युध्यमानस्य मेऽधुना । दूषणं किमु नामात्र ?, सुरा विमृशत स्वयम् ॥ २१ ॥ जितं च जितकाशित्वात्, सर्वत्राप्येष मन्यते । भाद्रभ्रष्टेक्षणः सर्वा, हरिताद्रमिव क्षितिम् ॥ २२ ॥ अनेनैवाभिमानेन, जेतुमागादयं मामपि । दन्तीवाद्रिं मदाद्भेत्तुं, हेलोन्मूलितपादपः ॥ २३ ॥ तदस्यामुमहङ्कार-ज्वरापस्मारमीदृशम् । सुवैद्य इव भङ्क्ष्यामि, युधि निर्जित्य हेलया ॥ २४ ॥ गुणैरेवाप्यते गौरे-गौरवं वयसा नतु । सर्वेभ्योऽपि वयोवृद्धा, गौरव्या गिरयो न यत् ॥ २५ ॥ शरीरे चिरलग्नोऽपि, दुर्गन्धस्त्यज्यते मलः । पुष्पं शिरसि सद्यस्कं, मूर्ध्नि च ध्रियते जनैः ॥ २७ ॥ पितृदत्तानि राज्यानि, गृह्णानेनाऽनुजन्मनाम् । अमुना तु स्वयं स्वस्य, मागण्याविष्कृता गुणाः ! ॥ २७ ॥ अमर्यादमिमं लुब्धं, निर्दाक्षिण्यं मदोद्धतम् । कमाश्रित्य गुणं ब्रूत, मध्यस्थास्तन्नमाम्यहम् ? ॥ २८ ॥ नम्रतापि गुणैष्वेव, सुधीभिः शस्यते नृणाम् । गुणाभावे पुनः सापि, दोषोद्घोषाय कल्पते ॥ २९ ॥ यदुक्तम्-भर्जयत्यद्भुतां लक्ष्मीं, गुणं मति नमद्धनुः । विना गुणं नमस्कार्ये, वक्रं त्वपयशः पुनः ॥ ३३० ॥ अनेनार्जितमैश्वर्यं, भुज्यमानं न मे मनाक् । मनोमोदाय सिंहस्य, परैर्दत्तमिवामिषम् ॥ ३१ ॥ षट्खण्डभरतैश्वर्यं, कुर्वतः सर्वमात्मसात् । अमुमेव निग्राह्याशु, लगत्येका हि मे पटी ॥ ३२ ॥ स्वराज्येन स्वदारैश्च, सन्तुष्टस्य परं मम । पराश्रियः परस्त्रीश्च, तृणवन्मन्यते मनः ॥ ३३ ॥ विपाकं मेत्य पापस्य, दुस्सहं हृदये विदन् । द्रुह्येत्परेभ्यो निःशङ्कं, राज्यमात्रकृते हि कः ? ॥ ३४ ॥ संविभागचिकीर्नायं, ह्यमेमाऽनुज-

११ * *

न्मसु । राज्यादानाय संभाप्तो, निस्तितारायिपुस्तु नः ॥ ३५ ॥ अत्याकृष्टं त्रुट्याशु, स्फुटत्यतिभृतं पुनः । विषं स्याच्चातिमथितं, न वेत्सीत्यव्ययं किमु ? ॥ ३६ ॥ आत्ताशेषाऽन्यराजन्य-राज्यो राज्यकृते ह्यसौ । अतिलोभाभिभूतोऽयं, मामप्याह्वयतेऽधुना ॥ ३७ ॥ जाने सद्मनिषण्णस्य, राज्यदानाय मेऽधुना । प्रतिभूतिरिवाकृष्यानाय्यसावत्र मन्त्रिभिः ॥ ३८ ॥ स्वयं चान्यवचोतुन्नः, पश्चाद्यापि याति चेत् । तद्यातु कुशलेनैष, न लोभो हृदि मे मनाक् ॥ ३९ ॥ मयाऽस्योपेक्षितैवास्ते, राज्यलक्ष्मीरियं ध्रुवम् । अनात्मज्ञं तदद्यापि, युद्धादेनं निषेधत ॥ ३४० ॥ न केनापि सहोदीर्य, युद्धं कर्हिचिदाददे । मुखमाप्तमिव ग्रासं, न मुञ्चे ह्यागतं पुनः ४१ ॥ इति शौर्योर्जितैस्तस्य वचनैर्युक्तिगर्भितैः । सुरा निरुत्तरीभूता, भूयोऽप्येवं बभाषिरे ॥ ४२ ॥ त्वदोकसि प्रवेशाय, चक्ररत्नस्य साम्प्रतम् । युध्यमानस्त्वया सार्द्धं, चक्री केन निषिध्यते ? ॥ ४३ ॥ त्वमप्यमुञ्चन्नायान्तं, युद्धं नाम न वार्यसे । इदं हि तेजः सत्राणां, यत्सत्राणां कुलव्रतम् ॥ ४४ ॥ सौजन्यशालिनोर्भ्रात्रो-रपि तद्युवयोर्मिथः । नूनं जगदभाग्येन, युद्धमेतदुपास्थितम् ॥ ४५ ॥ आर्थिताऽर्थमथाकल्प !, तथाप्यस्माभिरर्थ्यसे । उत्तमेनाथ युद्धेन, युध्येथायां युवां मिथः ॥ ४६ ॥ लोकद्वयविरोध्येत-ज्जन्तुजातविघातकृत् । यद्वीर ! युवयोर्युद्धं, युज्यते न हि मध्यमम् ॥ ४७ ॥ युद्धं दृष्ट्यादिभिश्चात्र, स्वल्पारम्भतयोत्तमम् । ज्ञास्येते वामनेनापि, स्पष्टं जयपराजयौ ॥ ४८ ॥ तत्सुरोक्तं बाहुबलिः सानुकम्पः प्रपन्नवान् । साभिमानोऽनुमेनान-स्तत्तथा भरतोऽप्यथ ॥ ४९ ॥ अशोर्ध्वबाहुर्वेकुली-पतेर्वेत्री द्विपास्थितः । इति न्यवर्त्तयद्योधान्, निजान्युध्योद्यतान् युधः ॥ ३५० ॥ रणकण्डूलदोर्दण्डः, प्रार्थितास्त्रिदशैः प्रभुः । योत्स्यते वृषभनाथ, समं भरतभूभुजा ॥ ५१ ॥ ततो विद्वेषिषु युद्धे, द्वेषं त्यजत साम्प्रतम् । निवर्त्तध्वं पुनः

शूराः, । क्रूरात्सङ्ग्रामकर्मणः ॥५२॥ अदृष्टपूर्वं क्वचन, स्वामिनो रणकौशलम् । विस्मयस्मेरनयना–स्तदस्थाश्चाद्य पश्यत ॥ ५३ ॥ अथो निवर्तमानास्ते, स्वाम्यादेशेन वेत्रिणा । सोद्वेगं व्यमृशन्नेवं, युद्धोत्कमनसो हृदि ॥ ५४ ॥ चिरं नः पश्यतामासीद्, युद्धपर्वेदमागतम् । आस्याद् ग्रास इवैतत्तु, दुर्दैवेन हृतं हहा ॥ ५५ ॥ न कश्चिद्भरतादन्यो, भरतेऽप्यथवाऽस्ति सः । युद्धाय स्वभुजस्थाम्ना, मभुमाह्वास्यते तु यः ॥ ५६ ॥ ततश्चक्रे वृथाऽस्माभि–रियान् शस्त्रपरिश्रमः । मभोर्ग्रासोऽपि दायादै–रिव जग्धश्च हा मुधा ॥ ५७ ॥ मभौरुपस्थिते दैवाद्, रणेऽस्मिन् सह बन्धुना । वैरिविध्वंसनेनात्र, न द्यभूमोपयोगिनः ॥ ५८ ॥ तथैव भरतस्यापि, तदा वेत्री स्वसैनिकान् । विद्वेषिविजयोद्युक्तान्, द्राक् मासारयद्रणात् ॥ ५९ ॥ अथापसार्यमाणास्ते, तेनादेशेन चक्रिणः । इत्थमालोचयन्ति स्म, द्वन्दीभूय पदे पदे ॥३६०॥ वैरिणः कस्य मन्त्रेण, साम्प्रतं स्वामिना हहा । द्विबाहुमात्रिकेणैव, युद्धमेतदमन्यत ॥ ६१ ॥ राज्ञा युध्यात्मरक्षार्थं, सङ्गृह्यन्ते हि सेवकाः । दाहाभावाय हस्तस्य, दर्वी च परिवेषणे ॥ ६२ ॥ स्वयं चेद्युध्यते राजा, सेवकेष्वथ सत्स्वपि । अजागलस्तनप्रायाः, कस्मै कार्याय तेऽस्य तत् ॥ ६३ ॥ नूनं भृत्येषु नष्टेषु, विनष्टेषु जितेषु वा । अङ्गेन स्वामिनो युद्धं, युज्यते नान्यथा पुनः ॥ ६४ ॥ युद्धं च कश्चिदन्यत्र, स्वामिनोऽस्य महौजसः । न स्यात्पराजयारेका, ध्रुवस्यैकं बहुलीपतिम् ॥ ६५ ॥ यत्तस्यैकाङ्गवीरस्य, पुरो वज्रधरोऽपि न । युद्धे स्थातुमलं धान्य–कीटका द्वासतां परे ॥ ६६ ॥ तन्नूनं बलिनाऽनेन, समं न स्वामिनोऽधुना । द्वन्द्वयुद्धं परिणाम–सुन्दरं प्रतिभाति नः ॥ ६७ ॥ एवं पराजयाशङ्का–शङ्कुसङ्कुलचेतसः । सैनिकानिङ्गितैर्ज्ञात्वा, न्यगादीदथ चक्रभृत् ॥ ६८ ॥ युष्माभिर्निःसीमस्थाम–धामभिः परितो धृतम् । मा यावत्र बालिष्ठोऽपि, योद्धुं कोऽप्यायया रिपुः ॥६९॥ तन्नादर्शत दोर्वीर्यं, कश्चिन्मे तत्पराजयम् । शङ्कध्वेऽत्र भयं

प्रीति-रस्थानेऽपि हि शङ्कते ॥२७०॥ तद् दोर्वीर्यं पराऽसह्यं, सकृत् पश्यत मेऽधुना । युष्माकं मनसः शङ्का, यथैषाशु प्रणश्यति ॥७१॥ इत्युक्त्वा महतीं गर्ता, खानयित्वा स्वपूरुषैः । सिंहासनं निवेश्याथ, तत्कण्ठे च निविष्टवान् ॥७२॥ लम्बाः सहस्रशो लोह-शृङ्खलाः प्रतिशृङ्खलाः । अथातिनिबिडाः पाणौ, चक्रपाणिरबन्धयत् ॥ ७३ ॥ सोऽथ द्वात्रिंशतं भूप-सहस्रानेवमादिशत् । सर्वे सर्वाञ्जसा सर्व-सैन्यैर्युक्ता महौजसः ॥ ७४ ॥ यूयमाकृष्य गर्तेऽस्मिन्, द्रुतं पातयताऽद्य माम् । मद्भुजौजसः-परीक्षार्थं, नात्राऽवज्ञाच्छलं हि वः ॥ ७५ ॥ दुःस्वप्नमथाद्य यामिन्यां ददृशेऽस्माभिरीदृशः । सोऽप्येवं प्रतिहन्येत, चरितार्थीकृतः स्वयम् ॥ ७६ ॥ ईदृक्स्वामिदृढादेशात्, सर्वे सर्वबलेन ते । अथ तच्छृङ्खलाजालं, विलग्याऽऽचकृषुः समम् ॥ ७७ ॥ चक्रिणाथ स्वयं पाणी, वीटिकार्थं प्रसारिते । एतावत्प्रभुराकृष्ट, इत्यमोदन्त ते हृदि ॥ ७८ ॥ अथास्ये वीटिकां क्षेप्तु—मस्मिन् पश्चाच्च वालिते । ते सर्वे प्रत्युताकृष्टा, गर्तान्तर्न्यपतन् द्रुतम् ॥ ७९ ॥ विभाव्येत्यतुलं स्वामि-दोर्बलं मुदिताशयाः । अथाऽत्यजन् हृदः शङ्कां, करेभ्यः शृङ्खलाश्च ते ॥ २८० ॥ अथ तावार्षभी पूर्व, द्वन्द्वयुध्योद्यतौ शुची । जिनार्चामर्चितुं स्वस्व-देवतासद्म जग्मतुः ॥ ८१ ॥ धर्मं न हि महाकार्या-पातेऽप्युज्झन्ति पण्डिताः । सर्वत्र श्रूयते ह्येवं, 'यतो धर्मस्ततो जयः" ॥ ८२ ॥ तत्र श्रीऋषभस्वामि-प्रतिमां परमार्हतौ । तावपूजयतां भक्त्या, दिव्यमाल्याक्षतादिभिः ॥ ८३ ॥ कृतारात्रिकमङ्गल्य-प्रदीपौ विधिनाऽथ तौ । श्रद्धया तेनतुरत्थ्या-मित्थं स्वामिगुणस्तुतिम् ॥ ८४ ॥ जय प्रथमतीर्थेश !, धर्मकर्मोपदेशक ! । दुष्टाष्टादृष्टनिर्मुक्त ! मुक्तिसीमान्तिनीवर ! ॥ ८५ ॥ जय त्रिभुवनाधीश ! केवलज्ञानभास्कर ! । भवाम्भोनिधिनिर्मग्न-जन्तुजातोद्धारक ! ॥ ८६ ॥ तापोत्तीर्णसुवर्णाभ !, जय त्रैलोक्यलोचन !॥ नतमर्त्यामराधीश !,

विजयस्य ध्वजध्वज ! ॥ ८७ ॥ इति स्तुत्वा प्रभुं नत्वा, महोत्साहौ महौजसौ । अथ सर्वाङ्गसन्नद्धौ, तौ युद्धभुवमीयतुः
॥ ८८ ॥ अन्योन्यसंमुखन्यस्त—निर्निमेषारुणेक्षणौ । प्रतिज्ञयाऽथ दृग्युद्धं, तत्र तौ सुचिरं स्थितौ ॥ ८९ ॥ सुरैर्नभस्थैः पृष्ठस्थैः,
सैनिकैश्च सकौतुकम् । अदर्शिषातां मुक्तान्य—व्यापृती योगिनाविव ॥ ३९० ॥ अथ न्यमीलतां चक्रि—चक्षुषी गलदम्बुनी ।
तीव्रं बाहुबलेश्चक्षु—स्तेजः सोढुमिवाऽक्षमे ॥ ९१ ॥ तदा तत्र जितं बाहु—बलिनेति दिवि ध्वनिः । देवानां चक्रभृत्कीर्ति—प्रवास-
पटहायितः ॥ ९२ ॥ बले बाहुबलेरासी—द्धर्षकोलाहलो महान् । अभूद्विषादविध्यातं, घर्मं चक्रं च चक्रिणः ॥ ९३ ॥
वीक्ष्य व्रीडाविलक्षास्यं, तदा भरतभूपतिम् । साभिमानमना बाहु—बलिरेवमभाषत ॥ ९४ ॥ इदं घुणाक्षरन्यायात्—जितं न
जितमुच्यते । वाग्युद्धेनाथ युध्यस्व, तदुत्तिष्ठ महाभुज ! ॥ ९५ ॥ सिंहनादमथाकार्षी—च्चक्री हृष्टमना मनाक् । कल्पान्तका-
लजलद—स्तनितध्वनिसोदरम् ॥ ९६ ॥ रश्मिं नाऽजीगणन् रथ्या, नाऽङ्कुशं मत्तदन्तिनः । हयाश्च न कशाघातं, तेन त्रासा-
कुलास्तदा ॥ ९७ ॥ महाबाहुर्बाहुबलिः, सिंहनादमथाऽतनोत् ॥ द्यावापृथिव्यौ परितः, पूरयन्तं प्रतिस्वनैः ॥ ९८ ॥
प्रतिघाताद् ध्वनेस्तस्य, चकम्पे परितोऽपि भूः । चुक्षुभे जलधिः शैला—श्चेलुश्चेलुश्च दिग्गजाः ॥ ९९ ॥ तदा दिवौकसोऽप्या-
सन्, श्रुत्वा तमतिदुःश्रवम् । नभस्यकाण्डब्रह्माण्ड—स्फोटशङ्काकुलाः क्षणम् ॥ ४०० ॥ एवं तौ चक्रतुर्वीरौ, सिंहनादं पुनः
पुनः । क्रमेणाधममैत्रीव, चक्रिणः स त्वहीयत ॥ १ ॥ राज्ञोऽतिबलिनो बाहु—बलिनश्च क्रमेण सः । दिनाऽपरार्द्धच्छायेव,
वर्द्धते स्माऽधिकाधिकम् ॥ २ ॥ जितश्चक्रीति वाग्युद्धे, बाहुयुद्धचिकीरथ । निजं प्रासारयद् बाहुं, गोपुरस्यार्गलामिव ॥ ३ ॥
चक्रित्बाहुं द्रुतं बाहु—बलिः कमलनालवत् । नमयित्वा निजं वज्र—सारं प्रासारयद् भुजम् ॥ ४ ॥ सर्वौजसा नमयितुं, तमुपक्रमत

चक्रभृत्। अपि चालयितुं स्थाना—च्चिरेणाप्यशकन्न तु ॥ ५ ॥ श्यामास्यं भरतं बाहु—युद्धेऽपीति पराजयात्। पुनर्बाहु-बलिः प्रोचे, तेजसामेकशेवधिः ॥ ६ ॥ मैवं वादीस्त्वयाऽत्रापि, काकतालीयवज्जितम्। आगच्छ मुष्टियुद्धेना-प्यथ युध्यस्व भूपते! ॥ ७ ॥ ततः स मुदितो मुष्टि-युद्धार्थं पुनरुत्थितः। "पराजयो हि स्वादिष्टो, युद्धेऽपि द्यूतवद् भवेत्" ॥ ८ ॥ कूर्मदिग्गजशेषाहि-वराहादीन् महीभृतः। सोत्कर्षमवदन् भट्टा-स्तदेत्युचितवादिनः ॥९॥ वज्रसारशरीरेण, यद् बाहुबलिना समम्। वज्रसारवपुश्चक्री, मल्लयुद्धेन योत्स्यते ॥४१०॥ आहन्यमानाश्चरण-प्रहारैरसकृत् तयोः। मायासैन्या स्म विश्लिष्यन् सन्धिरेप. रसातलम् ॥ ११ ॥ इति सर्वौजसा सर्वे—ऽप्यत्र सम्भूय सर्वतः। सावधानतयाऽधत्त, धरणीमनणीयसीम् ॥ १२ ॥ (चतुर्भिः कलापकम्) अथ तौ मल्लयुद्धेन, युध्यमानौ महौजसौ। संयुज्येते वियुज्येते, तत्क्षणात्कांस्यतालवत् ॥ १३ ॥ उत्पतेतां क्षणाद् व्योम्नि, निपतेतां च पक्षिवत्। वञ्चयन्तौ मिथो मुष्टी-रिति चिक्रीडतुश्चिरम् ॥ १४ ॥ (युग्मम्) अथ चक्रिणमुत्क्षिप्य, पाणिभ्यां बहुलीपतिः। यन्त्रेणेवाऽश्मनो गोलं, सुदूरमुदलालयत् ॥ १५ ॥ अनुजोच्छालितो व्योम्नि, दिवं जेतुमिव व्रजन्। क्षणात् सोऽदृश्यतां भेजे, धनुर्मुक्त इवाशुगः ॥ १६ ॥ नूनं पुंरत्नमद्यायं, चक्रवर्ती मृतो हहा। इतिहाहारवश्चासीत्, सैन्ययोरुभयोरपि ॥ १७ ॥ तदा हृदि सुनन्दासू-र्विषादादिति दध्यिवान्। अविचारितकारित्व-मिदं धिग् धिग् च पौरुषम् ॥ १८ ॥ सत्रश्लाघ्यामिमां धिग् च, परतेजोऽसहिष्णुताम्। यद्भ्रातृनिग्रहान्तोऽयं, विग्रहः समभून्मम ॥ १९ ॥ अलं वाऽथाऽनुतापेन, पतिता यावदम्बरात्। खण्डशो न भवेत्तावत्, प्रतीच्छाम्यग्रजम् ॥४२०॥ इत्यालोच्य नभोन्यस्त-स्थिर-दृष्टिस्ततश्चिरम्। स विलोक्य पतन्तं तं, प्रतीच्छ्य मुमुचे शनैः ॥ २१ ॥ वैरेऽपि भ्रातृस्नेहेन, तेन स्थाम्ना च विस्मिताः।

तदा बाहुबलेर्मूर्ध्नि, पुष्पवृष्टिं व्यधुः सुराः ॥ २२ ॥ अथ तादृक्पराभूति—व्रीडितो भरतः क्रुधा । मुष्टिमहार्यं मुमुचे,
द्राग्बाहुबलिवक्षसि ॥ २३ ॥ घनप्रहारवद् वज्रे, कृतघ्ने चोपकारवत् । दक्षोऽपि स परं तत्र, वज्रसारे विफल्यभूत् ॥ २४ ॥
पुनरुद्दीप्तकोपाब्धि—रथ बाहुबलिर्बली । मुष्ट्या चक्रभृतं वक्ष—स्याहन् कुलिशदेश्यया ॥ २५ ॥ तद्घातेन भ्रमच्चक्षु—र्भरतो व्यथितो
भृशम् । पेशित्र सर्वतो विश्वं, चक्रारूढमिव क्षणम् ॥ २६ ॥ तत्क्षणात्रष्टचैतन्यो, मूर्च्छामीलितलोचनः । सर्वं च
निपपातोर्व्या—मनुजीविजनाश्रुभिः ॥ २७ ॥ अथ तं मन्त्रिसामन्तैः, शीतलैश्चन्दनाम्बुभिः । सिच्यमानं वीज्यमानं,
चलच्चेलाञ्चलैर्मुहुः ॥ २८ ॥ भ्रातृहत्योद्भवत्पश्चा—त्तापः स्निग्धाशयोऽग्रजे । अपि बाहुबलिः साश्रु—दृष्टिः स्वयमवीजयत् ॥ २९ ॥
( युग्मम् ) क्षणेनाप्तचैतन्यः, किञ्चिदुन्मीलितेक्षणः । उत्तस्थौ भरतः सैन्य—हर्षकोलाहलैः समम् ॥४३०॥ वीजयन्तं स्वं चेलेन,
तदा भृत्यमिवाग्रतः । वीक्ष्य बाहुबलिं ह्रीण—श्चक्री नीचैर्व्यलोकयत् ॥ ३१ ॥ अथ व्रीडाविलक्षास्यं, तं बाहुबलिरित्यवक् ।
नूनं पराजितोऽस्मीति, वैवर्ण्यं वीर ! मा स्म गाः ॥ ३२ ॥ येन निर्जित्य सर्वोर्वी, हेलयैवात्मसात् कृता । पुरस्तुल्यबलस्तस्य, तत्र
नास्ते जगत्यपि ॥ ३३ ॥ दैवात् पराजयेऽप्यत्र, वीर एवासि तद् ध्रुवम् । मथितोऽप्युदधिर्देवा—सुरैरुदधि एव यत् ॥ ३४ ॥
इति प्रशस्यमानोऽपि, मर्मविद्ध इवाधिकम् । क्रुद्धश्चक्री पुनर्योद्धुं, दण्डरत्नमुपाददे ॥ ३५ ॥
साभिमानमना युद्धा—ध्यवसायमयं हहा ! । अद्याप्यमुञ्चन्नियतं, भ्रातृहत्यां प्रदास्यति ॥ ३६ ॥
विमृशन्तमिति स्वान्ते, बहुलीशमथ क्रुधा । दण्डेनाहतवान् मूर्ध्नि, निरपेक्षं नृपाग्रणीः ॥ ३७ ॥ व्यथितस्तेन घातेन, घूर्णमानेक्षणः
क्षणम् । क्षितौ न्यमज्जदाजानु, तदा तक्षशिलापतिः ॥ ३८ ॥ स्वास्थ्यमाप्तः क्षणेनाथ, क्षितेर्निर्गत्य स क्रुधाः । जघान

भरतार्यशं, मूर्ध्नि दण्डेन निर्दयम् ॥ ३९ ॥ वज्रवद् दुःसहेनाथ, तद्घातेनार्दितो भृशम् । आकण्ठं नष्टचैतन्यः, प्रविष्टो भरतः क्षितौ ॥ ४४० ॥ तदा गाढव्यथावेशाद्, घूर्णमानः स भानुना । मुधावशिष्टः सभयं, क्षणं राहुरतर्क्यत ॥ ४१ ॥ चिराच्छीतानिलैः प्राप्त-चैतन्यो निर्गतः क्षितेः । व्युच्छिन्नविजयाशोऽथ, सविषादं स दध्यिवान् ॥ ४२ ॥ सुरासुरनराध्यक्षं, हहाऽनेन महौजसा । जित्वाऽहं पञ्चकृत्वोऽथ, नीतो जीवितसंशयम् ॥ ४३ ॥ तन्नूनं कथमप्याजौ, महाबाहुरयं मया । न जेतुमथ शक्येत, चमरेणेव वासवः ॥ ४४ ॥ न दृष्टं न श्रुतं चैत-ल्लोके शास्त्रे च कुत्रचित् । राजाधिराजो यच्चक्री, जीयते राजभिः परैः ॥ ४५ ॥ अयमेव महाबाहु-श्चक्रवर्ती ततः क्षितौ । नूनमेतस्य निर्देश-वर्ती सेनापतिस्त्वहम् ॥ ४६ ॥ इतिचिन्तयतश्चित्ते सदुःखमथ चक्रिणः । चक्राधिष्ठातृभिर्देवै-श्चक्रं पाणौ न्यवेश्यत ॥ ४७ ॥ पाणौ चक्रागमात् स्वस्मिन्, जातचक्रित्वनिश्चयः । पुनर्जातजयाशोऽथ मुमुदे भरतो हृदि ॥ ४८ ॥ आत्तचक्रं तमालोक्य, बहुलीशोऽथ दध्यिवान् । न्याययुद्धाध्वनो भ्रष्ट-मिमं हा ! धिग् नृपाधमम् ॥ ४९ ॥ सद्यानायुधैः सार्द्धं, योद्धव्यमिति पत्रयः । मयि दण्डधरे त्वेष, योद्धुं चक्रमुपाददे ॥ ४५० ॥ विमृशन्तमिति स्वान्ते, भरतस्तमथाब्रवीत् । किञ्चिद्विनष्टं नाद्यापि, वत्सागच्छ भजस्व माम् ॥ ५१ ॥ भ्रातृहत्यां मुधा मा दा, यद्दुच्छेत्तुं मदोद्धतान् । धावमानमिदं चक्र-रत्नं धर्त्तुं न कोऽप्यलम् ॥ ५२ ॥ तदा बाहुबलिः प्राह, हसन्नीषदवज्ञया । भ्रातः किं दर्शयस्यस्य, लोहखण्डस्य मे भयम् ? ॥ ५३ ॥ ईदृग्विभीषिकातो ये, बिभ्यत्यन्ये हि ते नराः । न हीदं तत्कापित्थं हि, यद्भ्रंश्यति नभस्वता ॥ ५४ ॥ इयद्वलं व्यलोकिष्ठाः, स्वदोर्ष्णोर्विपुलं बलम् । अथास्यापि सकृत्किञ्चिद्, बलं वीर ! विलोकय ॥ ५५ ॥ अथानुजन्मनेत्युक्तो, भरतः कुपितो भृशम् । मूर्द्धोर्ध्वे भ्रमयित्वाशु, चक्रं सर्वौजसाऽमुचद् ॥ ५६ ॥

मात्सराजयकालुष्यं, क्षालितं प्रभुणाऽधुना । ऊर्ध्वं चक्रभृतः सैन्ये, सानन्दमिति पश्यति ॥ ५७ ॥
दुर्वारमर्दः शल्यार्द्र–रिदमिति प्रभोर्वपुः । तत्किं बाहुबले बाहु–बलेश्चैवं विषीदति ॥ ५८ ॥
अमुक्तमिदमाचीर्णं, राज्यलुब्धेन चक्रिणा । हाहाकारमिति व्योम्नि, कुर्वाणेषु सुरेषु च ॥ ५९ ॥ विमुञ्चत् सर्वतोऽप्यग्नि–
स्फुलिङ्गानेतदापतत् । विलोक्याथ सुनन्दासू–श्चेतस्येवं व्यचिन्तयत् ॥ ४६० ॥ ( चतुर्भिः कलापकम् ) किमेतत् स्खलयाम्याशु,
दूरादाहत्य मुद्गरैः । मुष्टिप्रहारैः प्रसभं, पार्श्वमासं पिनाष्मि वा ॥ ६१ ॥ कपोतपोतवत् पाणौ, गृह्णाम्यागच्छदेव वा ।
इदमेत्यात्र किं कुर्या–दिति पश्यामि वा सकृत् ॥ ६२ ॥ इति चिन्तयतो बाहु–बलेर्निर्भयचेतसः । दत्त्वा प्रदक्षिणां पश्चा–
दगाच्चक्रं यथागतम् ॥ ६३ ॥ अकृत्वाऽर्थमथोऽमोघ–शस्त्रे तस्मिन्नुपागते । इति चक्रधरश्चित्ते, सविषादं व्यभावयत् ॥ ६४ ॥
निर्दोषित्वं जगज्जैत्रं, कर्मापीदृग् व्यधां हहा ! । अथ चाभून्न काप्यत्र, कार्यसिद्धिः समीहिता ॥ ६५ ॥ इति नूनं
भ्रमाकान्तां, पाटकेऽपि भविष्यामि । कृत्तिर्नास्थिभिरप्यासीत् , तथ्याऽभूल्लोकगीरियम् ॥ ६६ ॥ अथैवं विकलीभूत–निःशेषो–
पक्रमोऽनुजे । व्रीडाविलक्षो भरतः, किंकर्तव्यजडोऽभवत् ॥ ६७ ॥ उपेक्षितश्चिरं नूनं, भ्रातृभावादयं मया । नोज्झत्यद्यापि
पापात्मा, परं प्रकृतिमात्मनः ॥ ६८ ॥ निरपेक्षमथाहत्य, तन्मुष्टया चूर्णयाम्यमुम् । न हि मत्येति मूढात्मा, शरीरानुभवं
विना ॥ ६९ ॥ एवंकृतमतिः क्रोधा–ध्मातोऽथ बहुलीपतिः । भरतं हन्तुमुत्पाट्य, दूरान्मुष्टिमधावत ॥ ४७० ॥ निहन्तुं
भ्रातरं पापं ज्येष्ठं कोपरूढारुक् । विममर्श मनस्येवं, स विवेकबृहस्पतिः ॥ ७१ ॥ धिगेतामविमृश्यार्थ–कारितां विश्वगर्हिताम् ।
यदग्रजमतोऽस्म्येवं, पितृस्थानीयमग्रजम् ॥ ७२ ॥ हन्यन्ते भ्रातरोऽप्येवं, यत्र लुब्धैर्नराधिपैः । साधूक्तं नरकान्तं तद्,

राज्यमीदृग् मलीमसम् ॥ ७३ ॥ यद्राज्यं माज्यमप्येवं, निहत्याऽग्रजमर्ज्यते । तेन दुष्कर्ममूलेन, न मे नूनं प्रयोजनम् ॥ ७४ ॥ ततो लोभाभिभूतात्मा, वराको मदुपेक्षितः । जीवत्वेष चिरं राज्यं, निःसपत्नं भुनक्तु च ॥ ७५ ॥ वियुक्तः सर्वसावद्या-रम्भयोगैरहं पुनः । प्रतिपद्ये पितुः पुण्य-पद्धतिं परमेशितुः ॥ ७६ ॥ इत्यभङ्गुरवैराग्य-रङ्गादालोच्य चेतसि । जिगीषुरान्तरारातीन्, दीक्षामादातुमुद्यतः ॥ ७७ ॥ दूरादुत्पाटितां मुष्टिं, निहन्तुं भरतेश्वरम् । उद्धर्तुं मूर्धजान् सद्यः, स्वमूर्द्धन्येव सोऽमुचत् ॥ ७८ ॥ (युग्मम्) अथ सांसारिकक्लेश-कन्दानिव चिरोद्गतान् । उद्धृत्य स्वशिरःश्मश्रु-कुन्तलान् पञ्चमुष्टिना ॥ ७९ ॥ सुपर्वकृतसान्निध्यं, सार्वभौमं महौजसम् । सर्वयुद्धेषु जित्वापि, राज्यश्रीसुखनिःस्पृहः ॥ ४८० ॥ यदीदृशरणारम्भ-संरम्भेऽप्येष सत्वरम् । शान्तस्वभावः समभू-दिदं चित्रमहो महत् ! ॥ ८१ ॥ एवं सविस्मयैर्देवै-र्वीक्ष्यमाणो नभःस्थितैः । स भेजे सर्वसावद्य—विरतिं सत्त्वशेवधिः ॥ ८२ ॥ (चतुर्भिः कलापकम्) अथ सम्प्रत्युपेतस्य, तातपार्श्वं ममाऽनुजाः । वन्दनीया भविष्यन्ति, ज्ञानिनः पूर्वदीक्षिताः ॥ ८३ ॥ तन्मे नोत्पद्यते यावत्, केवलज्ञानमुज्ज्वलम् । तावदत्रैव तिष्ठामि, त्यक्त्वाहारं चतुर्विधम् ॥ ८४ ॥ विमृश्यैवं बाहुबलिः, साभिमानमना मनाक् । कायोत्सर्गं विधायाऽस्थात्, तत्रैवाऽचलनिश्चलः ॥ ८५ ॥ (त्रिभिर्विशेषकम्) अथ तं देवतादत्त—यतिवेषममत्सरम् । वीक्ष्यात्मारामभनसं, ह्रीणश्चक्रीति दध्यिवान् ॥ ८६ ॥ निर्जित्याखिलयुद्धेषु, मामयं स्वभुजौजसा । आत्मसात्कृतमप्येवं, हेलया राज्यमत्यजत् ॥ ८७ ॥ बहुधाऽप्यमुना युद्धे, पराभूतोऽप्यहं पुनः । अद्याप्यखण्डभूराज्य-कदाशां न त्यजामि हा ! ॥ ८८ ॥ तदेकस्य जगन्नेतुः, पुत्रयोः पश्यतावयोः । न्यपतत् कर्मवैचित्र्या-दुभयोः कियदन्तरम् ! ॥ ८९ ॥ अथावोचत् स सामन्त-सचिवैः सर्वतो वृतः । निपत्य पदयोः साश्रु-दृष्टि-

स्तस्याऽनुजन्मनः ॥ ४९० ॥ अतिलोभाभिभूतेन, मयेदानीं दुरात्मना । अपराद्धं किमपि यत्, तत् क्षमस्व क्षमाधन ! ॥ ९१ ॥ भावी मात्सर्यसोदर्य-वियोगव्यथितस्य मे । त्वद्वियोगः क्षतक्षार-क्षेपवद् दुःसहोऽधुना ॥ ९२ ॥ भ्रातर्भातृवियोगाग्नि-तप्तं सिक्त्वा तदाशु माम् । सस्नेहालिङ्गनालाप-जलैः शीतलयाऽधुना ॥ ९३ ॥ त्वदेकजीविताशैतान्, पत्नीपुत्रानुजीविनः । संभावय महावीर !, सकृत्स्नेहार्द्रया दृशा ॥ ९४ ॥ इत्याद्युक्तोऽपि बहुशः, चक्रिणा चाटुभाषिते । सदवस्तुसुहृत्स्वर्ण-लोष्टस्त्रैणतृणो-त्करः ॥ ९५ ॥ शुभध्यानाधिरूढोऽयं वासीचन्दनतुल्यहृत् । नासाग्रन्यस्तदृग् नैष-दालोकिष्टापि सम्मुखम् ॥ ९६ ॥ (युग्मम्) तमस्ताऽशेषसंसार--व्यासङ्गं चक्रभृत्तदा । विनयावनमन्मौलि-रस्तौषीदिति सादरम् ॥ ९७ ॥ जय भ्रातर्जगद्वीर !, सर्वेशानगमित्वर ! । जय तत्त्वज्ञकोटीर !, पापपांशुसमीरण ! ॥९८॥ जय तातपथाऽनन्य !, जय संसारपारग ! । जय शान्तरसाधार !, रागद्वेषवियुक्तहृत्॥९९॥भ्रातृव्यं सोमयशस,स्नेहादाहूय चक्रभृत् । अतिष्ठिपद्धयो तक्ष-शिलाराज्ये महामहैः॥५००॥लोकोत्तरचरित्रेण, तेन तस्यानुजन्मनः । हृदि विस्मयमानश्च, राजधानीं निजां ययौ ॥१॥ इतश्च प्रथमे पुण्यो-पदेशे प्रथमेशितुः । ब्राह्मी मुमुक्षा मासीद्, भरतेशसहोदरी ॥ २ ॥ आददाना तदा दीक्षां, सुन्दर्यपि शुभाशया । स्त्रीरत्नं मे भविनीति, निषिद्धा चक्र-वर्तिना ॥ ३ ॥ आचामाम्लानि दीक्षाया-मतीवोत्कण्ठिताऽथ सा । षष्टि वर्षसहस्राणि, तनोति स्म निरन्तरम् ॥ ४ ॥ चिरं दिग्विजयं कृत्वा, भरतोऽथ गृहागत । राज्येऽभिषिक्तः क्ष्मापालै-र्मैहैर्द्वादशवार्षिकैः ॥ ५ ॥ निजं कुटुम्बं निःशेषं, निश्चि-न्तोऽथ निभालयन् । सुन्दरीं सुकृशां वीक्ष्य, हिमप्लुष्टाऽब्जिनीमिव ॥ ६ ॥ स सूपकारानप्राक्षीद्, दुर्बलेयं किमीदृशी ? । किं भोज्यन्यूनता काऽपि, विद्यतेऽस्याकृपोकसि ? ॥ ७ ॥ विषमोऽस्यास्तनौ कश्चिद्, व्याधिर्वा बाधतेऽधिकम् ? । केनाप्येषा

गृहान्तर्वा, माननीयाऽपमानिता ? ॥ ८ ॥ ( त्रिभिर्विशेषकम् ) तेऽप्यूचुरस्या दौर्बल्ये, नैतत् किमपि कारणम् । प्रव्रजन्ती परं
देव !, निषिद्धेषा यदा त्वया ॥ ९ ॥ ततः प्रभृति संसार–व्यासव्यासङ्गवर्जिता । आचामाम्लतपो देहा–नपेक्षं तनुते
सदा ॥ ५१० ॥ आरूव्याऽथ तत्कार्श्य–हेतुमात्मानमेव सः । जातचित्तानुतापस्तां, सप्रश्रयमभाषत ॥११॥ प्रव्रज्यां प्रति-
पित्सोस्ते, मोहान्धमनसा मया । अन्तरायस्तदा तेने, तं क्षमस्व शुभाशये ! ॥ १२ ॥ त्वमप्येवं भवाम्भोधौ, विषयैर्मज्जता
मया । निमज्जयितुमारब्धा, धिग् ममाऽज्ञानचेष्टितम् ॥ १३ ॥ प्रव्रज्याप्रतिपत्त्यर्थं, तपो ! दुःसाध्यमीदृशम् । सुभ्रु ! साभिग्र-
हाकार्षी–रहो ते भवभीरुता ! ॥ १४ ॥ तत्प्रपद्य पितुः पार्श्वे, प्रव्रज्यामथ सत्वरम् । उत्तीर्य च भवाम्भोधिं, परमं पदमा-
प्नुहि ॥ १५ ॥ इत्यभङ्गुरवैराग्या–ऽनुमतिं प्राप्य चक्रिणः । हृष्यमोदत सा बाढं, निधानमिव निर्धनः ॥ १६ ॥ अथ प्रव्र-
ज्यसंवेगा, सा शुभेऽहनि शुभाशया । प्राव्राजीत्पितृपादान्ते, चक्रिकॢप्तैर्महामहैः ॥ १७॥ साहङ्कारस्य तत्रैव, तस्थुषोऽथ रण-
शिर्नौ । श्रीबाहुबलिनः कायो–त्सर्गनिश्चलचेतसः ॥१८॥ वर्षान्ते प्रतिबोधाय, तद्वृत्ताख्यानपूर्वकम् । अमूढलक्षस्ते ब्राह्मी–सुन्दर्यौ
प्राहिणोत्प्रभुः ॥ १९॥ (युग्मम्) ततस्ते तत्र सर्वत्र, वीक्षमाणे अपि स्फुटम् । तमवीक्ष्य प्रभुं तत्र, नेक्ष्यते सेत्यशोचताम् ॥ ५२० ॥
तत्रैवास्ति वत्से, तं वीक्षिष्यामिति प्रभुः । तयोः पुनरभिज्ञाना–ख्यानपूर्वं समादिशत् ॥ २१ ॥ ते चाथाऽऽहिते तत्र, वीक्ष्यमाणे
इतस्ततः । वल्लीवितानैः परितो–ऽप्यावृतं वनवृक्षवत् ॥ २२ ॥ वेष्टिताऽन्वयवं सर्पैः, प्रसर्पद्भिर्यदृच्छया । कृतनीडं श्रवणयोः,
शुचिभर्ता शकुन्तिभिः ॥ २३ ॥ वर्षाशीतातपक्लेशान्, सहमानं सुदुस्सहान्, । क्षितेः स्यूतपदं भूमौ, दर्भसूच्चिव निस्सृतैः ॥ २४ ॥
नानोपसर्गसंसर्गे–ऽप्यचलाचलविग्रहम् । नासाग्रन्यस्तदृग्द्वन्द्वं, तं मुनीशमपश्यताम् ॥ २५ ॥ (चतुर्भिः कलापकम्)

साहङ्कारहृदं दूरात्, तं नमस्कृत्य बान्धवम् । परिणामहितां चैते, वाचमेवमवोचताम् ॥ २६ ॥ करिस्कन्धाधिरूढस्य, केवलज्ञानमुज्ज्वलम् । भ्रातर्नोत्पद्यते जातु, तदस्माद् द्रुतमुत्तर ॥ २७ ॥ तदा श्रुत्वा स तां स्वस्रो–रुपलक्ष्य च दध्यिवान् । एतत्किमुक्तं साध्वीभ्या–मसम्भाव्यमिवाऽधुना ॥ २८ ॥ चिरात्परिहृताऽशेष–सावद्यस्य मम त्रिधा । वने तपस्यतो यत्र, सम्भवोऽप्यत्र हस्तिनः ॥ २९ ॥ घटते वा मृषाऽप्युक्ति–र्नैतयोर्व्रतनिष्ठयोः । तदत्र किमु तात्पर्य, ज्ञातमेतन्मयाऽथवा ॥ ५३० ॥ व्रतज्येष्ठान् कथं शान–यतो वन्देऽनुजन्मनः । इति गर्वगजस्कन्ध–मध्यारुह्य स्थितोऽस्म्यहम् ॥३१॥ मूढेनेपदहङ्कारपङ्कसम्पर्कतो मया । ईदृक्पवित्रं चारित्रं, हहा धिग् मलिनीकृतम् ॥ ३२ ॥ एतदेव परिज्ञानं, यच्छान्तरसपेशलम् । नाऽहङ्काररजःपुञ्जै–र्मलिनीकुरुते मनः ॥ ३३ ॥ दीक्षा क्षणमपि प्रायः, सम्यक्परिणता हृदि । पुंसां क्षपयति क्षिप्रं, पापं नैकभवार्जितम् ॥ ३४ ॥ अत एव क्षणेनापि, प्राग् यः प्रव्राजितो यतिः । सामान्यमपि तं सार्व–भौमसाधुर्नमस्यति ॥ ३५ ॥ ततस्तेषां महर्षीणां, सर्वेषामनुजन्मनाम् । प्रणिपत्य पदौ सद्यः, शुद्धिं कुर्वे निजैनसाम् ॥ ३६ ॥ यदुक्तम्–अभिगमणवंदणनमंसणेण पडिपुच्छणेण साहूणं । चिरसंचिअंपि कम्मं, खणेण विरलत्तणमुवेइ ॥ ३७ ॥ इत्यस्ताऽहङ्कृतिर्गन्तु–मुत्क्षिपणे च संक्रमे । घातिकर्मक्षयात् प्राप, केवलज्ञानमुज्ज्वलम् ॥ ३८ ॥ प्रभुं प्रदक्षिणीकृत्य, केवलज्ञानिपर्षदि । गत्वा न्यषीदन्निर्व्यूढप्रतिज्ञोऽथ स केवली ॥ ३९ ॥ प्रतिबोध्य चिरं भव्यान्, प्रसुप्तान् मोहनिद्रया । श्रीयुगादिजिनेशोऽथ, केवलालोकभास्करः ॥ ५४० ॥ कुमारा बाहुबल्याद्याः, सर्वे चाष्टौ सुताङ्गजाः । सिद्धिसौधमलञ्चक्रुः, सहैवाष्टापदाऽचले ( युग्मम् ) ॥ ४१ ॥ तप्यमाने तपो ब्राह्मी–सुन्दर्यावपि दुस्तपम् । क्षिप्त्वा निःशेषकर्माणि, क्रमान्निर्वृतिमीयतुः ॥ ४२ ॥ अथ च–नवापि निधयो

यस्य, सञ्चरन्ति पदोरथः । चतुर्दश च रत्नानि, सुरसेव्यानि सद्मानि ॥ ४३ ॥ कोटयः पण्णवतिर्यस्य, ग्रामाः पादातिकास्तथा । लक्षाश्चतुरशीतिश्च, रथसामजवाजिनाम् ॥ ४४ ॥ यं यक्षा वरिवस्यन्ति, सहस्राः पञ्चविंशतिः । द्वात्रिंशच्च सदा बद्ध–मुकुटाश्च महीभुजः ॥ ४५ ॥ चतुःषष्टिसहस्राश्च, भोगभूमिर्वराङ्गनाः । सपादलक्षमामिता, यस्य वाराङ्गनाः पुनः ॥ ४६ ॥ सहस्रा विंशतिर्यस्य, वज्ररत्नादिकाकराः । द्वात्रिंशच्च महादेशाः, सौराज्यमुदितप्रजाः ॥ ४७ ॥ सहस्रा यस्य षट्त्रिंशद्, वेलाकूलानिवित्तभूः । द्वासप्ततिसहस्राणि, सत्पुराणि महान्ति च ॥ ४८ ॥ यस्य पत्तन ४८००० खेटानि, १६००० समृद्धानि सहस्रशः । मडम्ब २४००० कर्बट २४००० द्रोणमुख ९९००० संवाधनानि १४००० च ॥ ४९ ॥ ग्रामादीनां च लक्षणमिदम्— ग्रामो वृत्त्यावृतः स्यान्नगरमुरुचतुर्गोपुरोद्भासिशोभम् । खेटं नद्यद्रिवेष्टं परिवृतमभितः कर्वटं पर्वतेन ॥ ग्रामैर्युक्तं मडम्बं दलितदशशतैः पत्तनं रत्नयोनि–र्द्रोणाख्यं सिन्धुवेलावलयितमथ सम्बाधनं चाद्रिशृङ्गे ॥ ५५० ॥ सहस्राः षोडश म्लेच्छ–भूभुजो यस्य सेवकाः । यस्य चोत्कृष्टमैश्वर्य–मित्याद्यन्यदपि क्षितौ ॥ ५१ ॥ स्नातावलिप्तः सर्वाङ्ग–भूषितश्च स चक्रभृत् । प्रत्यहं स्ववपुःशोभां, पश्यत्यादर्शसद्मनि ॥ ५२ ॥ तत्राऽन्यदा–ङ्गुलीं वीक्ष्य, विच्छायां भ्रष्टमुद्रिकाम् । सर्वाङ्गाभरणान्येष, कौतुकेनामुचत् क्रमात् ॥ ५३ ॥ स्ववपुः फाल्गुनभ्रष्टा–ऽशेषपर्णद्रुवत्तदा !, तत्र वीक्ष्यातिनिःश्रीकं, व्यपीदज्ज्वरतो हृदि ॥ ५४ ॥ अचिन्तयच्च धिगहो !, वपुषो भूषणादिभिः । श्रीरहार्यैव कुड्यस्य, पुस्ताद्यैरिव कर्मभिः ॥ ५५ ॥ अन्तः-क्लिन्नस्य विष्ठाद्यै–र्मलैः श्रोतोभवैर्बहिः । चिन्त्यमानं किमप्यस्य, शरीरस्य न शोभनम् ॥ ५६ ॥ वहिः कथञ्चिद् यद्येतत्, प्ररोच्येत तथापि हि । नैयग्रोधं फलमिव, मध्ये कृमिकुलाकुलम् ॥ ५७ ॥ इदं शरीरं कर्पूर–कस्तुरीप्रभृतीन्यपि । दूषयत्येव

पाथोद्-पयांस्यूपरभूरिव ॥ ५८ ॥ यकृच्छकृन्मूत्रमल-स्वेदाऽऽमयमयस्य यत् । प्रसाधनं वपुषस्तद्, गृहधोतोऽधिवासनम् ॥ ५९ ॥ विरज्य विषयेभ्यो यै-स्तेपे मोक्षफलं तपः । तैरेव फलमेतस्य, जगृहे तत्त्ववेदिभिः ॥ ५६० ॥ गत्वरेणामुना यच्च, मोक्षः साध्येत साधु तत् । विद्युतेव क्षणाद् दृष्ट-नष्टया वर्त्मवीक्षणम् ॥ ६१ ॥ किञ्च-अरघट्टीघटी-न्याये-नैहिरेयाहिरे ह्हा । कुर्वन्तोऽद्यापि संसारे, निर्विद्यन्ते न जन्तवः ॥ ६२ ॥ शुभध्यानामलजलैः, स्फुरद्भिरिति मानसे । प्रक्षालिताखिलमलो, राजहंसोऽभवच्छुचिः ॥ ६३ ॥ ईदृक्श्रीसम्पदाभोग-संयोगेऽपि महामनाः । पद्मपत्रमिवालेप-प्रकृतिर्भरतेश्वरः ॥ ६४ ॥ धृतातपत्रो वारस्त्री-वीज्यमानोरुचामरः । सद्यो भावयतीभूतः, केवलज्ञानमाप्तवान् ॥ ६५ ॥ ( युग्मम् ) अथात्तयतिनेपथ्यः, कृतज्ञानोत्सवः सुरैः । भव्याङ्गिनाश्चिरं चक्री, प्रतिबोध्य ययौ शिवम् ॥ ६६ ॥ कुमारश्चादित्ययशाः, प्रभुपौत्रः पराक्रमी । प्रधानैरभिषिक्तोऽथ, पट्टे भरतभूभुजः ॥ ६७ ॥ प्रस्तावात् प्रतिबोधोऽत्र, भरतेश्वरचक्रिणः । राज्ञो बाहुबलेर्ब्राह्मी-सुन्दर्योश्चैवमोच्यत ॥ ६८ ॥ सुतानामष्टनवतेः, प्रतिबोधविधायिनीम् । ऐहिकामुष्मिकानेक-दुष्कर्मफलदर्शिनीम् ॥ ६९ ॥ आदिनेतुर्निशम्यैतां, देशनां पापनाशिनीम् । श्रीजिनोपज्ञधर्माय, यतध्वं भव्यजन्तवः ! ॥ ५७० ॥ ( युग्मम् ) आसंस्तीव्रतपोनिष्ठाः, "श्रीतपा" इति विश्रुताः । बृहद्गच्छे गुणश्रेष्ठाः, श्रीजगच्चन्द्रसूरयः ॥ ७१ ॥ आनुपूर्व्याऽभवंस्तेभ्यो, भाग्यसौभाग्यनिःसमाः । तपागच्छेशितारः श्री-सोमसुन्दरसूरयः ॥ ७२ ॥ युगोत्तमगुणाश्वासं-स्तत्पट्टे प्रथितोदयाः । सहस्रावधानाः श्रीमुनिसुन्दरसूरयः ॥ ७३ ॥ तेनिवांस्तत्पदाम्भोज-भ्रमरः सोममण्डनः । एतां स्वान्योपकाराय, युगादिजिनदेशनाम् ॥ ७४ ॥ अत्रोत्सूत्रं यदज्ञाना-ऽनाभोगाभ्यां मयोच्यत । तन्मिथ्यादुष्कृतं भूया-दर्हत्सिद्धादि-

साक्षिकम् ॥ ७५ ॥ शोध्या सुधीभिः सक्षेपं, परोपकृतिकर्मठैः । वाचनीया चिरं चैषा, जयाभ्युदयदायिनी ॥ ७६ ॥
मुनिसुन्दरसूरीश—पट्टे विजयिनोऽधुना । श्रीरत्नशेखरगणा—धीशा वः शिवसम्पदे ॥ ५७७ ॥

इति श्रीतपागच्छाधिराजश्रीसोमसुन्दरसूरिपट्टालङ्कारतपागच्छनायकपरमगुरुश्री—मुनिसुन्दरसूरिविनेयवाचनाचार्य—सोममण्डनगणिकृतायां श्रीयुगादिजिनदेशनायां पञ्चम उल्लासः ॥

## ॥ समाप्तेयं युगादिदेशना ॥

आचार्य श्रीमद् विजयपद्मसूरीश्वर जैनग्रन्थमाला तरफथी बहार पडेल ग्रन्थो

| ग्रन्थांक | नाम | किंमत | ग्रन्थांक | नाम | किंमत |
|---|---|---|---|---|---|
| १ | मौन एकादशी पद्य कथा | ०—१—० | १५ | लघुप्रवचनसारोध्धार मूल | भेट |
| २ | यवराजर्षि कथा | ०—१—३ | १६ | आवश्यकनिर्युक्तिदीपिका भा. १ | ३—८—० |
| ९ | प्रतिक्रमणसूत्रपदविवृत्ति | ०—५—० | १९ | प्राचीनसज्झाय पदसंग्रह | ०—१२—० |
| ११ | पिंडविशुद्धि सटीक | १—१२—० | २० | स्वाध्यायदोहन | ०—२—० |
| १३ | विविध प्रश्नोत्तर भा. २ | ०—३—० | २१ | श्रीसिध्धाचल महातीर्थादि स्तवनावलि | ०—६—० |
| १४ | सुमतऋषिकथा प्राकृत | भेट | | | |